C.No- 3976.
Digitized By Siddhanta eGangotri Gyaan Kosha
4513.

कंदगल्ल

पर्वतसुधीकवि विरचित:

# करड़ीश चरिताऽमृत-चम्पू प्रबन्धः

015,1x1,1
MO

प्रकाशक :

श्रीजगद्गुरु गंगाधर धर्मप्रचारक मंडल

मूरुसाविरमठ हुब्बल्लि

१९८०



CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

श्रीजगद्गुरु-मूरुसाविरमठीय-ग्रन्थमाला – १०९

कन्दगल्ल-पर्वतसुधीकवि-विरचित:

# करडीश-चरिताऽमृत-चम्पू-प्रबन्धः

सम्पादकः

डा० गुरुसिद्धदेवशिवाचार्यः,
एम्० ए०, पी-एच्० डी०; दर्शनशास्त्र-चक्रवर्ती ( काशी );
काव्यतीर्थम् ( कलकत्ता ); काव्यनिधिः (ढाका);
काशी-हिन्दू-विश्वविद्यालयतो लब्ध-स्वर्णपदकः;
राजगुरु-हिरेमठः, केळदी – ५७७४०१



प्रकाशकः

श्रीजगद्गुरु-गङ्गाधर-धर्मप्रचारक-मण्डलम्
मूरुसाविर-मठः, हुब्बल्ली – ५८००२०

१९८०

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

Kandagalla Parvatasudhī Kaviviracitaḥ Karadīśacaritāmṛta Campū Prabhandhaḥ

Edited by : Dr. Gurusiddha Deva, Shivacharya

015,1x1,1
MO

Published by :

Shri Jagadguru Gangadhara Dharmapracharaka-Mandalam Moorusavira Math, HUBLI - 580020
Karnataka Rajya, INDIA

© Publisher

First Edition : MAY, 1980

Copies : 1000

Priee : Rs..........25 only

Printer :

Sadanand Pawar
Sadanand Printers, old Dalal Market
DHARWAR - 580001

SRI JAGADGURU VISHWARADHYA
JNANA SIMHASAN JNANAMANDIR
LIBRARY
Jangamawadi Math, Varanasi
Acc. No. ......3976...........

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



करडीशचरितामृतचम्पूप्रबन्धग्रन्थकर्ता
पण्डितप्रवरः कविः
श्रीकन्दगल्लपर्वतसुधीः

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

# विषय-योजना



CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha





CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

परम-पूज्यानां हुब्बळी-मूरुसाविर-मठाध्यक्षाणां
श्रीमन्महाराज-निरञ्जन-जगद्गुरुवर्याणां
श्रीगङ्गाधरराजयोगीन्द्र-महास्वामिनाम्

# आशीर्वचनम्

प्रकाण्ड-पण्डित-प्रवरेण 'कन्दगल्ल-पर्वत-सुधी' नामक-कविना विरचितोऽयं "करडीश-चरिताऽमृत-चम्पूप्रबन्धः" सद्योऽर्वाचीन-चम्पूकाव्ये वरीवर्तते ।

देवनागरीलिपि - मुद्राऽक्षराऽलङ्कृतो बृहत्-संस्कृत - ग्रन्थोऽयं "हूब्बळी मुरुसाविरमठीय ( भ्रूललतापुरी-त्रिसहस्रमठीय ) -श्रीमज्-जगद्गुरु-गङ्गाधर-धर्मप्रचारक-मण्डल" स्य तत्वाऽवधानेऽधुना 'मण्डल' स्य नवोत्तर-शततम ( २०७ ) ग्रन्थरूपेणाँऽत्र मुद्रितः खलु ।

काशी-हिन्दू-विश्वविद्यालयस्य' 'दर्शन-शास्त्र-चक्रवर्ती" इत्यादि-पदवी-विभूषितेन केळदी-राजगुरु-हिरेमठाऽध्यक्षेण पूर्णत्वकारेणाऽस्मद्डा० श्रीष० ब्र० गुरुसिद्धदेव-शिवाचार्येण सम्यक् सम्पादितस्याऽस्य "करडीश-चरिताऽमृत-चम्पूप्रबन्ध"स्य प्रकटनेऽस्माभिर्महदानन्दोऽनुभूयते ।

पूर्वं पूर्व-नियोजित-नियमाऽनुसारेण-प्रौढ-ग्रन्थस्याऽस्य प्रकटन-विषयेऽननुकूलतया यद्यपि दशक-द्वय-वर्षस्य विलम्बो जातस्तथाऽपि, कनकगिरि-स्थ-शिक्षकस्य ग्रन्थकर्तृ-कविपौत्रस्य कन्दगल्लमठीय-श्रीपर्व-

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



तय्याख्यस्य वारंवारं कृत-विज्ञापनाऽ नुरोधेनाऽ-स्माभिरस्य संस्कृत-ग्रन्थस्य प्रकृष्ट-प्रयास-साध्यः सम्पादन-भारोऽस्मत् केळदी-शिवाचार्यायाऽर्पितः। कर्तव्य-बुद्ध्या तं भारम् आत्मीयतया स्वीकृतवता तत्समर्थ-विदुषा डा० केळदी-शिवाचार्येण यथाशीघ्रं सम्पादन-पद्धत्याऽयं ग्रन्थः सम्प्रति सम्पूर्णं सम्पादितोऽस्ति ।

"करडीश-चरिताऽमृत-चम्पूप्रबन्ध" नामकेऽस्मिन् ग्रन्थे महोन्नत-दासोह-जीवन-शीलस्य बल्लारी-सक्करी - करडीशाख्य- शरणस्य चारित्र्य-वर्णनमस्ति। कल्याणश्री-बसवेश्वरस्येव बल्लारीभागे बसवाख्य-सक्करी-करडीशस्य शाश्वत-कीर्तिविस्तृता विद्यते। प्रत्यहम् असंख्यातेभ्यो दीन-दलिताऽ नाथेभ्योऽ न्नादानम्, गुरु-लिङग-जङगमेष्वनन्य श्रध्दा-नैष्ठिक-भक्तिः, बुधेभ्यः कलाकारेंभ्योऽ सदृशाऽऽ श्रयदानम्, स्वयं कृतेष्टलिङ्गाऽ र्चनाऽनुभावाऽऽचरणं च करडीशस्य दैनन्दिनं कर्तव्यमासीत् ।

यावज्जीवं तत्करडीश-शरणस्य जीवनं हि समाजोध्दारक-कार्येष्वेव सदा विनियोजितम् आसी देव। एकोनविंशति-शततमे समयेऽस्मत् श्रीमद् वीरशैव-समाजस्याऽ भिवृद्ध्यर्थं विशाल-रीत्या विद्याऽध्ययन-व्यवस्थायां तु करडीश एव सर्व-प्रथम इति श्रूयते। धन-विहीनेभ्यो विद्यार्थिभ्यो बुधवरेभ्यश्च पालक-रूपेण धन-धान्य-वस्त्रादि-साहाय्यम् अकरोत् स करडीशः ।

एकोनविंश-शततमीय-महाऽनुभावाऽग्रगण्य-शिवशरणोऽयं करडीशोऽस्मद्-वीरशैव-संस्कृतेः संस्कार-साहित्य - सङ्गीत-सम्प्रदाय-कला-विधि-विधानादीनां प्रोज्जीवनार्थं " श्री गुरुनिवास-संस्कृत-पाठशाला " नामिकां विद्या-शालां तदा संस्थापितवान् । त्रिंशद्वर्षाऽधिक-पर्यन्तं समग्रं करडीश एव तस्याः पाठशालायाः समर्थसञ्चालक आसीत् ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


तस्याम् आदर्श-पाठशालायां सकलां विद्याम् अधीत्य, तदनन्तरम् अध्यापयित्वा च सम्यगध्यापनं कारयित्वा वा बहवो महानुभावास्तत्र-तत्र सुप्रसिद्धाः सन्त्येव। महानुभावेषु च तेषु चित्रगी-संस्थान-मठीय-इलकल्ल—श्रीविजय महान्त - स्वामिनः, हावेरीस्थ-हुक्केरी-मठीय-श्रीशिवबसव-स्वामिनः; अपि च चम्पूप्रबन्धस्याऽस्य कवि—श्री—कन्दगल्ल-पर्वतसुधी-प्रभृतीनां नामान्युल्लेखनीयानि सन्ति।

निश्चितमिदं यत् करडीश-कृत - सफल-प्रयत्नदेवाऽत्र वीरशैव-समाजस्य चैतन्यम् अक्षुण्णमिव प्रतिभासतेऽधुनाऽपि। तच्चैतन्यस्य संरक्षणमेव करडीशं प्रति सर्वेषामस्माकं कृतज्ञता-समर्पणरूपं कर्तव्यमिति ज्ञातव्यम्।

चम्पू-काव्य-सकलगुण - समन्वितस्य नव-स्तबक - सहितस्याऽस्य चम्पूप्रबन्धस्य कवेरभिधानं हि "कन्दगल्ल-पर्वतसुधीः" इति। कविरयं करडीशस्य पाठशालायां विद्याऽध्ययनं कृतवान। कवेरस्य काव्ये काव्य-वर्णना-वैखरी, पद-संयोजना, तत्त्व-विचारणा, विषय-विवेचनादिकं हि सहज-कविता-घनता -प्रमिता- प्रतिभा-सम्पन्नमस्तीति सुस्पष्टं प्रतिभाति :—

"नत्वा तं यति-पुङ्गवं, पद-तले स्थित्वा, तदंघ्रि-द्वयं।
नुत्वा, फाल-तटे तराऽम्बुज-युगं धृत्वा, कुमारोऽदिशत्; ॥
ध्यात्वा योगिवरश्चिदा स्मित-मुग्धो भूत्वा, परं सादरं।
कृत्वाताननुमोदिनः समवदद् भित्वा भयं भावि तत् ०॥"

शिष्यस्याऽभिवन्दनम्, गुरुणा चाऽभीर्वचन-दानं चाऽत्र सहजमेव हृदयङ्गम-रीत्या प्रचलित-पदैरेव प्रकटीकृतं कविनाऽनेन।

कविरयं चित्रगी-विजयमहान्त-स्वामिनः परम-शिष्योऽपि तत्स्वामिनां सहपाठी छात्र आसीत् करडीश-पाठशालायाम्। तद्विजय-

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


महान्त-स्वामिन अधिकृत्य कविनाऽनेन "चित्रगी-विजय-महान्तेश-चम्पू प्रबन्ध" इत्यपरः प्रबन्धोऽ स्टकादयश्च लिखिताः खलु तदपरोटं प्रबन्धोऽपि यथानुकूलं शीघ्रमेव प्रकटयिष्यते ।

प्रकृतं 'करडीश-चरिताऽमृत-चम्पूप्रबन्धम्' संशोध्य, परिष्कृत्य, सम्पादकवचन-सारांशाऽनुबन्धादि-लेखनैः समलङ्कृत्य च ग्रन्थम् सम्पादितवन्तः, केळदी-राजगुरुहिरेमठीया डा० गुरुसिध्ददेव-शिवाचार्याः । प्रस्तुत-शिवाचार्या हि घन-विद्वांसः; काशी-हिन्दू-विश्वविधालयाल्लब्ध-सुवर्ण-पदकाः; "अद्वैतवेदान्त-शाक्ततन्त्रयोः साम्य-वैषम्य-चिन्तनम्" नामक-विषयमधिकृत्य,संस्कृत भाषा-माध्यमेनैव संशोधन-प्रवन्धं विलिख्य काशी-हिन्दू-विश्वविद्यालयात् "दर्शन-शात्र-चक्रवर्ती" इति 'डाक्टरेट्' (पी-एच० डी० ) पदवी-प्राप्ताः । कन्नड-संस्कृत-ग्रन्थ-रचनायामपि केळदी-शिवाचार्याणां लेखनी चिरपरिचिता । पूर्णत्वकाराणामेतेषां "पूर्णत्व"-नामकः तात्त्विक-सैद्धान्तिक-काव्यग्रन्थः प्रसिद्ध एव । प्रथमं, शिवयोगमन्दिर इव समग्रं षांड्श-वर्षपर्यन्तमस्मद् भ्रूलतापुरी-त्रिसहस्र-मठ-पीठस्य साहाय्य-सहकारात् काशी-क्षेत्रे सम्यक् संस्कृतमधीतवन्तः । समर्थानाम् एतेषां सर्वाऽऊगोण-समुन्नत-सम्पादकत्वे प्रकटितोऽयं ग्रन्थो विश्व-विद्यालयेऽपि पाठ्यो भवितुम् अर्होऽस्ति ।

अस्तु, कविहस्त-लिखितस्य 'करडीश चरितामृत-चम्पूप्रबन्धस्य मूलप्रतिं प्रकटनार्थं प्रदत्तवतः कवि-पुत्रस्य लिऊगैक्य-वीचन्नवीरशास्त्रिणः कनकगिरिस्थस्य च कवि-पौत्रस्य श्रीपर्वतय्य-शास्त्रीमहोदयस्य बन्धु-बान्धवेभ्यः, प्रबन्ध-सम्पादकेभ्यः सहकारिभ्यश्चाऽऽ युरारोग्य-भाग्य-सौख्य-प्रदानेन 'कर्तृ श्री जगद्गुरु-गुरुसिद्धेश्वरोऽ जस्रां सकलान् पालयितु' इत्याशास्महे ॥

॥ इति शिवम् ॥

श्री ज० गं० धर्मप्रचारक-मण्डलीयम्

'परंज्योति-भवनम्'

हुब्बल्ली - 580020

2-5-1980

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

# शुभाशंसनम्

चम्पूः श्री करडीशवृत्तसहिता
गीर्वाणवाणीकृता
हुब्बल्लीमठयोगिराजकृपया
नीता प्रकाशं नुता ।

श्रीमज्जङ्गममौलि–राजगुरुणा
संम्पादिता जाग्रता
जीयात् पण्डितराजपर्वतसुधी–
नाम्नः कवेः सत्कृतिः ।।

परोड्डु मल्लिकार्जुनः ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

# सम्पादक–वचनम्

चन्द्र-चन्द्रिका–चम्पनम्

"चरित्रोक्ति-चमत्कारात्। चर्चा–चक्रस्य चालने ॥
चम्पूप्रबन्ध–चन्द्रोऽयम्। चम्पयत्विह चन्द्रिकाम् ॥ *

"विस्मयनीय–महित - महिमार्णवस्य शिवस्य शिवशरणानां च स्तवनमेव भुवने कविता–तत्त्वविदां जन्म–फलमिति"[1] मन्वता कन्दगल्ल – पर्वतसुधी - कविना 'श्रीगुरु-दक्षिणामूर्तये नमः[2] इति, श्रीकार-पूर्वकं नमस्क्रियात्मक–मङ्गलादारभ्य, "जीयाद् आ-वसुधा-तलम्"[3] इत्यन्तम् आशीर्वादात्मक – मङ्गलाऽन्वितः " करडीश-चरिताऽमृत–चम्पूप्रबन्धो" विरचितः।

चम्पू-पदम्

"चम्पयति" गमयति, ज्ञापयति, मोक्षं प्रापयति वा, इति चम्पूः। चुरादि-गणीयस्य गत्यर्थकस्य "चम्प्" धातो ऊ प्रत्यये कृते, चम्पयति (चम्पयते वा) सिध्यति। अत एव हरिदास-भट्टाचार्यस्य कथनाऽनुसारेण "चमत्कृत्य पुनाति सहृदयान्; विस्मितीकृत्य प्रसादयति इति चम्पूः" इतीर्यते।

---

* सम्पादकेन डा० गुरुसिद्धदेव-शिवाचार्येण कृतम् मङ्गलम्;
1 करडीश-चरिताऽमृत-चम्पू-प्रबन्धः, पृष्ठं ७;
2 क० च० चं० प्र० पृष्ठं १;
3 क० च० चं० प्र० पृष्ठं २०८;

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


चम्पू-ग्रन्थः

काव्यादर्शकारश्चम्पू-काव्य-लक्षणं दर्शयति :-
"गद्य-पद्यमयी काचित्- । चम्पूरित्यपि विद्यते ॥"[1]

"गद्य-पद्यमयी साऽङ्का, सोऽछनासा चम्पूः" [2]इति काव्याऽनुशासनकारोऽनुशासनं तल्लक्षण-विषये करोति ।

साहित्यदर्पणकारस्तु "गद्यपद्यमयं चम्पू । काव्यामित्यभिधीयते ॥" इति [3]साहित्यदर्पणद्वारा तल्लक्षणं प्रदर्शयति ।

अचम्पू-ग्रन्थः

यद्यपि रघुवंश-कुमारसम्भव-किरातार्जुनीयप्रभृति-पद्यकाव्यानि; [4] दशकुमारचरित-कादम्बरीप्रभृति - गद्यकाव्यानि, [5]अभिज्ञानशाकुन्तल-उत्तररामचरितप्रभृति–नाटकानि [6]च, अचम्पू–ग्रन्था इति सुस्पष्टमेव । अपि च अग्निपुराणोक्तं (१) ख्यातं (२) प्रकीर्णं च,[7] साहित्यदर्पणोक्तं (३) करम्भकं [8](४) बिरुदं [9]च; सुमतीन्द्र प्रोक्ता (५) सुमतीन्द्र-जयघोषणा [10]च; एवं सर्वत्र लभ्यं (६)

---

1 काव्यादर्शः १-३१;
2 काव्यानुशासनम् ८-९;
3 साहित्यदर्पणः ६-३३६;
4 "छन्दोबद्धपदं पद्यम्" (साहित्यदर्पणः ६-३१४);
5 "कथायां सरसं वस्तु गद्यैरेव विनिर्मितम् ।" (सा० द० ६-३३२);
6 "नाटकं ख्यात-दृत्तं स्यात् .... बन्धनं तस्य कीर्तितम् ।" (साहित्य-दर्पणः ६-७);
7 "मिश्रं वपुरिति (१) ख्यातं (२) प्रकीर्णमिति च द्विधा ।" (अग्निपुराणं १३७-३८);
8 "करम्भकं तु भाषाभिर्विविधाभिर्विनिर्मितम् ।" (सा० द० ६-३३७);
9 'गद्य-पद्यमयी राज-स्तुतिर्विरुदमुच्यते ।" (सा० द० ६-३३७);
10 राज्यस्य चतुर्दिकस्थितानां पर्वतानां सीमादिकानां च एवं राज्ञः कीर्तेश्च साद्यन्तमङगलस्तोत्रयुक्तं गद्यपद्यमयवर्णनम् ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


आज्ञापत्रं [1] (७) दानपत्रं [2] च अत्रोक्त-सप्तविधानि गद्य-पद्यमयान्यपि चम्पू-लक्षण-समग्रन्ता-राहित्यात् मुक्तक-काव्य-सदृशान्येव; न तु चम्पूकाव्यानि । यतो हि समग्रं चम्पूकाव्य-स्वरूपं तु चम्पूकाव्ये एव सुस्पष्टं दृश्यते ।

अत्र चाऽय विशेषः, :- साङ्कारात्, उक्तिवैचित्र्यात्, लघुकाव्य-सदृश-लक्षण-समन्वितात् शिलाखण्डे, ताम्रपत्रे, तालपत्रे, कार्गदपत्रे वा लिखितस्याऽऽ ज्ञापत्रस्य च काव्यत्वाऽऽ रोपोऽ निवार्यतया स्वीकर्तव्यः । चम्पू-प्रवन्धग्रन्थः

यद्यप्यद्यावधि तत्र-तत्र ग्रन्थालयेषूपलब्धव्यानां पञ्चचत्वारिं-शदधिक-द्विशत ( २४७ ) संख्याकानां चम्पूकाव्यानां शिरोनाम्नि 'प्रबन्ध' इति पदं प्रायो नैव दृश्यते, तथाप्यत्र "करडीश-चरितामृत-चम्पूप्रबन्ध 'इत्याख्ययस्य प्रस्तुत-चम्पूकाव्यस्याऽस्य शिरोनाम्नि समलङ्कृतमस्ति । किमर्थमस्य 'प्रबन्ध' पद प्रयोगस्य वैशिष्ट्यम् ? इति चेद्, अत्रोच्यते-अव्याप्ति-अतिव्याप्ति-असम्भवाख्य-दोषत्रय-निवारणार्थं च लक्ष्ये लक्षणं सङ्गमयितुं, कथा-वस्तुनो वर्णना-परिपूर्णता-प्रदर्शन-सङ्केतार्थं, गद्य-प्रद्यमय-ग्रन्थरूपेण, प्रकर्षेण बन्धः 'प्रबन्ध' इति बोधनार्थं च कन्दगल्ल-पर्वतसुधी-कवि-विरचितस्य "करडीश-चरितामृत-चम्पूप्रबन्धः" इति नामकस्य ग्रन्थस्य शिरोनाम्नि प्रयुक्तस्य 'प्रबन्ध' इति पदस्य प्रयोगः समुचितः ।

"गद्य-पद्यमयं श्रव्यं । "स-बन्धं" बहु वर्णितम् ।।
सालङ्कृतं रसैः सिक्तं । चम्पूकाव्यम् उदाहृतम् ।।"[3]

---

1 प्रधान-शासकद्वारा धार्मिकपीठाधीश्वरद्वारा वा प्रसारितम् ।

2 देवस्थान-मठादिभ्यो दानिना प्रदत्तदानस्य लिखितरूपेणाऽपि स्पष्टीकरणार्थं स्मरणार्थं च लिखितम् ।

3 डा० छविनाथत्रिपाठी-महोदस्य;

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


इत्युक्त-लक्षणानुसारेणाऽपि प्रस्तुत-चम्पूप्रबन्धे सर्वलक्षणानि प्रतीतानि भवन्ति ।

प्रस्तुतस्याऽस्य "करडीश-चरितामृत-चम्पूप्रबन्धा" ख्यस्य ग्रन्थस्य शिरोनाम कथने ग्रन्थकर्तृ-कविनैव स्वयं 'प्रबन्ध' इति शब्दो वारं-वारं लिखितो दृश्यते :- "करडीश-चरिताऽमृत-चम्पूप्रबन्धो लिख्यते । भद्रम् अच्छिद्रं भूयात्[1]" "इति श्रीविनमदमर-निकर....पर्वतसुधी-विरचिते करडीश-जरिताऽमृत-चम्पूप्रबन्धे प्रथमः .... नवमः स्तवकः"[2]

"इति प्रमदनमदमराऽसुरेन्द्र....रुन्द्र-परशिव-पद-नखचन्द्र-निः-सरदपार-कृपा-रस-झरी-चञ्चच्-चन्द्रिका-चकोरामयान-मानस-सरस कविता-कुतुकित-पर्वतसुधी-विचित-श्रीमन्-महान्तेश-चरित-चम्पूप्रबन्धे" सरस-वाक्-सुबन्धे, त्यत्राऽपि प्रस्तुत-कविना स्वरचिते अपर-चम्पू-प्रबन्धेऽपि "प्रबन्ध" इति शब्दस्य प्रयोगः कृतः ।

कन्दगलल-पर्वतसुधीकवि-विरचितयोर्द्वयोः चम्पूप्रबन्धयोः प्रबन्ध इति पदं वर्तत एव । किन्तु, परिच्छेदाऽर्थक-विभागबोधकः शब्दः प्रयुक्तश्चेत्, "करडीश-चरिताऽमृत-चम्पू-प्रबन्धे" "स्तवक" इति पदं प्रयुक्तमस्ति ।

समग्रस्य चम्पूसाहित्यस्याऽवलोकनेन ज्ञायते यत् आश्वासः, उछ्वासः, उल्लासः, कल्लोलः, काण्डः, तरङ्गः, परिच्छेदः, मनोरथः, लम्भकः, विलासः, सर्गः, स्तवका वा इति विभागबोधकं पदं चम्पूग्रन्थे-षूपलभ्यते ।

भारतचम्पूः ( ११ शतमानीया ), पुरुदेवचम्पूः (१३ शतमाने विरचिता), भागवतचम्पूः (१५ शतमाने लिखिता) करडीशचरितामृत-

---

1 क० च० चं प्र० पृष्ठं १;

2 क० च० चं० प्र० पृष्ठं : १८, ३९, ६१, ८१, १०४, १२२, १३७, १५८, २०८;

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


चम्पूप्रबन्धः (२० शतमाने प्रकटितः) इत्यादयो ग्रन्थाः स्तवकाख्य-विभाग-युक्ता विराजन्ते।

'करडीश-चरितामृत-चम्पूप्रबन्ध' नामिका "सेयं सत्कृति-वल्ली सन्_। नव (९) स्तबक-मण्डिता।" [1]

कथा–वस्तु

नव-स्वकान्विते प्रस्तुत चम्पूप्रबन्धे ग्रन्थेऽस्मिन् चरित्र-नायको हि बल्लारी-वासी सक्करीत्युपपद-भूषितः"[2]। करडीशो हि धर्मप्राणोऽर्वाचीनः शिवशरणः। शरण–सक्करी–करडीशस्याऽस्य बाल्यनाम तु "बसव" इति ज्ञायते। तस्य पितरौ गङ्गाम्बिका–सङ्गनबसवाख्यौ सुशीलौ। बसवाख्य-करडीशोऽयम् अष्टावरण–षट्स्थल-पञ्चाचारपरायणो भूत्वा धार्मिक-सामाजिक–साहित्यिक–सांस्कृतिक-नैतिकप्रभृति–मानवतोद्धारविषये नव-जागृतिं प्रोत्साहयन् एकोन-विंशतिशतमानेऽपि द्वादशशतमान-कालीन-कल्याण-बसवेश्वरवत् बल्लरीप्रदेशे सहस्र-सहस्रशो जनानां जीवनम् उज्जीवयन् सञ्जीवयन् समञ्जसं शरण-जीवनम् अन्वजीवत् स शरणाग्रगण्यः।

तत्प्रशंसाऽहंस्य "करडीश्वरस्य चित्रं चरित्रम् अनूनं प्राह" [3] कविः।

"करडीश" इति पदस्य व्युत्पत्तिः कविनेत्थं कृता :– (क० च० चं० प्र० द्वि० स्तबके)

"कं" सुखे च समाख्यातं। घातू 'रा दान इत्यपि॥
कं रातीति करः प्रोक्तः। पण्डितैर्मति-मण्डितैः ॥५॥

---

1 क० च० चं० प्र० ९-२५५;

2 दोड्डप्पः, दोड्डबसवप्पः, करडीः, करडीश्वरः इति च करडीशस्यैव पर्याय-नामानि।

3 क० च० चं० प्र० १-६६

4 क० च० चं० प्र० १–८

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


डयते शोभते ज्ञानाद्-। इति 'डि:' परिकीर्तित: ॥
करश्चाऽसौ डि‍श्च करडिरिति प्रतिपादित: ॥६॥
ईष्टे तथाभूत इति । "करडीश" इति स्फुटम् ॥८॥

# करडीशकृताऽन्नदानं विद्यादानं च

सामान्यस्थितिसमय-क्षामसमययोरिव पम्पाक्षेत्रीय-वार्षिकरथोत्सव - समयेऽपि लक्षद्वयाऽधिक - जनेभ्योऽन्नदानशील: स करडीश: प्रशंसार्ह: ।[1]

अन्नदानवद् विद्यादानमप्यात्यावश्यकमिति परिज्ञातेन तेन सवकर्राकरडीश शरणेन तत्कालीन-परिस्थितिवलात् निश्चितमिदं यत्-"विद्यया किल विवेकसम्भव:"[2] किन्तु, विद्या-विहीन-घन-जङ्गमानां अन्ये भवन्ति हि गुणा: परिहासमूलम् ,[3]इति । "इत्थं विचार्य मनसा घन-सद्गुणाङ्क: । कर्तुं कलासु चतुरान् सुतारां गुणौघान् ।" [4]"श्रीगुरु निवास - संस्कृत-पाठशाला" नामिकां विद्या-संस्थां स्थापयामास स करडीश: ।

तस्यां करडीशपाठशाला-संस्थायाम् असंख्याता: स्वामिन: पण्डिताश्च विद्यां प्राप्तवन्त: । तत्र-स्वामिवर्गे उज्जयिनी-जगद्गुरु-चन्नबसव-देशिकेन्द्रस्वामी, चित्रगी विजयमहान्तस्वामी, बल्लारी जगद्गुरु-

---

1 "नित्यं सहस्र-चर-तृप्तिकर: कथ श्री- ।
नन्दीश्वरोऽयमिति लोकगतां च शङ्काम् ॥
लक्षद्वयाऽधिक-जनावसि-तृप्तिमत्राऽऽ ॥
धाय व्यमोहयदुपाश्रित-पारिजात: ॥ (क० च० चं प्र० ६-९९)
2 क० च० चं० प्र० ५-४५;
3 क० च० चं० प्र० ५-४०;
4 क० च० चं० प्र० ५-४८;

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


कोट्टूरुस्वामीमठीय मरिकोट्टूरु स्वामी, हावेरी-हुवकेरी-मठीय शिवबसवस्वामी प्रभृतयो मुख्याः ।

शास्त्रिणां च शत-शतवर्गे तु-उन्तगल्ल-कन्दगल्ल-नरेगल्ल-मुदगल्ल रटगल्ल ग्रामीणाः शास्त्रिणः [1]प्रमुखाः । तत्राऽपि च पञ्चसु शास्त्रिषु ग्रन्थस्याऽस्य रचयितृ-श्री कन्दगल्ल-पर्वतसुधी प्रभृतयो सन्मान्याः ।

# सुधी-चकोर-चर्चा

गण्य-मान्य-सम्मानितेन कन्दगल्ल पर्वतसुधी- कविना विरचितेऽस्मिन् चम्पूप्रबन्धेऽर्थगाम्भीर्यम्, सर्वाऽलङ्कारभूषम्, आदर्श-गुण-रीतित्व-छन्दोविलासलास्यताः तत्त्वसिद्धान्त-सौन्दर्यं; हृद्य-वर्णन-वैखरी तथा सम्भाव्य-काव्य-लक्षणप्रभृतयः सर्वे दरीदृश्यन्ते । अर्थालङ्कारवदस्मिन् प्रबन्धे हि छेकानुप्रासादि-अनुप्रासपञ्चक [2]तथा श्लोकेषु कर्णाटककाव्य-पद्धत्या आदिप्रास- [3]बाहूल्यमपि दृश्यते ।

"चञ्चन्महः कविकलानिधि-सत्कलौघो- ।
दञ्चत्कृतिप्रचुर चन्द्रिकया प्रमोदः ॥
प्राञ्चत्सुधीजन-चकोर-चयस्य तु स्यात्; ।
किञ्चाऽल्पधी-बक-चयस्य विसार-लिप्सा ॥"[4]

प्रसङ्गवशादस्य श्लोकस्य तृतीयचरणस्थं चकोरपदमधिकृत्य स्थालीपुलाकन्यायेन किञ्चिद् विचारणीयम् । "ज्ञेयं वसन्ततिलकं तभजा जगौ गः"

---

1 उन्तगल्ल-प्रभृतिपदानि तत्तद्ग्रामनामवाचकानि । तत्रत्याः शास्त्रिणो रत्नस्वरूपाः । अत एव ते पञ्च 'शल (कल्लु) रत्नानि ।

2 अनुप्रासपञ्चकं नाम (१) छेकानुप्रासः, (२) वृत्त्यनुप्रासः, (३) श्रुत्यनुप्रासः, (४) लाटानुप्रासः, (५) अन्त्यानुप्रासश्च ।

3 श्लोके चतुर्ष्वपि चरणेषु, आद्यस्य द्वितीयस्य च स्वरस्य मध्य-स्थानं द्रष्टव्यम् ।

4 क० च० चं० प्र० १-१७;

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


इति लक्षण-लक्षिते 'वसन्ततिलक'नामकछन्दोनिबद्धेऽस्मिन् श्लं.के वसन्तसमयवदाल्हाददायकस्य सुज्ञाऽर्थक-सुधीजनस्य, अल्पज्ञार्थकाऽल्पधं - -युतस्य च गुण-स्वभाव-प्रवृत्ति-व्यत्यास-कथनं चकोर-बकयोर्गुण-स्वभाव-प्रवृत्त्यादिकं स्मारयति संस्मरणशीलः कविः। चकोरा हि चन्द्रिकाम् अपेक्षते; बकस्य तु लिप्सा-अभिलाषा विसारें-मीनेऽस्ति। सत्यम्। अत एव, सुधीजनरूपि-चकोराणां समूहवत् कृतिप्रचुर-चन्द्रिकां-प्रकाशं द्रष्टु-प्राप्तुं सामूहिकरूपेण जीवन-यापनं कुरुत, भो मानवाः! नतु मत्स्य-भक्षोरूपाऽल्पधीयुत-वकानां समूहवत्, इति नीतिकथनं फलति-अर्थात् सुनिश्चितमिदं यत्-कन्दगल्ल-पर्वतसुधं-नामकः कविरयं सुधीजन-चकोर एव; एवं चैतत्कवि-कलानिधि-सत्-कलौघोदञ्चत्-कृतिप्रचुर-चन्द्रिका" [2]रूपिणीयं "करडीश-चरिताऽमृत चम्पूप्रबन्ध" नामिका कृतिः प्रकाशस्वरूपा, आनन्दाऽऽह्लाददायिनी च।

चकोरश्च [3] बकश्च द्वापि पक्षिणौ। तयोरवयव-संस्थिति-विषये च तौ सदृशौ; किन्तु तयोर्जीवनाऽऽहार-प्राप्ति-विषये भिन्नता-स्त्येव चकोर हि चन्द्रप्रकाश-सम्पर्काऽपेक्षी; मत्स्यभक्षी बकस्तु प्राण-घातकः खलः खलु।

सच्चकोर-दुर्बकयोर्विषये पूर्वमेवाऽत्र [4]सूचितमस्ति। अत्रैव च प्रथम-स्तबके द्वाविंशतितमे श्लोके-विशदचन्द्रबिम्व-सदृशः कविः; कवेश्च चम्पूप्रन्बधकृतिश्चन्द्रिका; काव्यरसाऽऽस्वादनशीला बुधा एव चकोरा इत्यभिप्रायः सूचितोऽनेनैव कविना।

---

1 छन्दोमञ्जरी २-११२

2 क० च० चं० प्र० १-१७

3 चकोर शब्दस्य प्रयोगो द्रष्टव्यः, क० च० चं० प्र० १-६
१-६७; २-२०, २-५७, २-९८; ३-६, ३-१८; ४-२५,
४-४४, ४-५०; ५-१८, ५-९८,

4 क० च० चं० प्र० १-१३;

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


एतेन "कन्दगल्ल-पर्वतसुधीः" इति नाम्नि प्रयुक्तस्य सुधी-शब्दस्य सार्थकताऽभिव्यक्ता ।

'पर्वत' पदं प्रति तु प्रस्तुत चम्पूप्रबन्धग्रन्थे सर्वेषां नवानां स्ववकानामन्ते [1]नव वारं तथाऽन्यत्राऽपि चाऽनेनैव कविवरेण स्वयं लिखितमस्ति ।

चम्पूप्रबन्ध-रचना-काल:

कन्दगल्ल पर्वतसुधी कवि-विरचितस्य करडीश-चरिताऽमृत-चम्पूप्रबन्धस्याऽस्य रचना-कालो हि, अष्टत्रिंशदधिकाऽष्टादश- शततमे (१८३८) शालिवाहनशकाब्दे, नलनाम संवत्सरे, शुक्रवार, सूर्येन्दुसङ्गम-समयरूप-अमावास्या-तिथिः । [2]अर्थात् षोडशाऽधिकैकोनविंशतिशततमे १९१७ ख्रिस्ताब्दे "करडीशचरितामृत - चम्पूप्रबन्धोऽयं रचितः कविना ।

सकल-गुण-गणना

"सन्माधुर्यरसा सु-पर्वतसुधी-वक्त्रेन्दु-बिम्ब-क्षरत् । चम्पूनाम-सुधाझरी हि सुमनस्तोषाय नैषा भवेत् ।।"

"पर्वतसूरिणा विरचिता शम्भु-प्रसादात् कृतिः ।"[3] "चम्पू ते गुण रागिणो बुधचयास्तुष्यन्तु; पुष्यन्त्विमाम् ।"[4]

---

1 क० च० चं० प्र० पृष्ठं १८, ३९, ६१, ८२, १०४, १२२, १३९, १५८, २०८

2 "संराजन्नृपशालिवाहन-शकाऽच्चन्नाग-वह्निवसु-।
क्षोणी संख्य-नलाऽब्द-पूरक-दिने दर्शे तु शुक्राऽभिधे ।।
पूर्णा पर्वतसूरिणा विरचिता शम्भु-प्रसादात् कृति ।
श्चम्पूः ।" (क० च० चं० प्र० ९-२५४)

3 क० च० च० प्र० ९-२५३;

4 क० च० चं प्र० ९-२५४;

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


"सन्नुपर्वताऽऽस्य-संस्रविणीं (करडीश्वरचरिताऽमृत वेणीं) पायं पायं सुमनःसङ्घास्तृप्यन्तु; निर्जराः सन्तु।"[1]

पर्यायेणाऽत्र चम्पूप्रवन्धस्यास्य गरिमा-महिमा – प्रदर्शनपूर्वकं काव्यस्योद्देश्यमपि ज्ञापितम् :- सुमनः सङ्घास्तृप्यन्तु; (तृप्तास्ते) निर्जराः सन्तु।"[1] अर्थात्, चम्पूप्रवन्ध-काव्यादेतस्मात् बुधानां सङ्घाः तृप्तिं प्राप्ता, जरा-रहिता निर्जरा देवा भवितुं शक्यन्ते इति यावत्।

अपि चम्पू च चम्पूप्रबन्धाख्यमिदं काव्यम् 'भव्य-स्तव्य-गुणाऽङ्क -नेतृ; बुध-श्राव्यम्; सुकाव्यम्; "[2]अत्र नोऽस्माकं (दोषाऽपेक्षिणाम्-खलानाम्) तोषकरो दोषां न कश्चिदस्तीति ग्लाश्चिन्तां मा भजन्ताम्; यतोहि चम्पूप्रबन्धोऽयं अर्वाचीनकाले लिखितावात् नवीनकृतिःस्वरूपः स एको दोषो भाव्य इहाऽस्ति; स च दोषोऽपि लोकोत्तरः; अर्थात्, नूतनकाव्येऽस्मिन् चम्पूप्रबन्धे नवीनताऽतिरिक्तो न काऽपि दोषो विद्यते; तथापि निन्दाऽऽनन्द–पर–स्वभावा जनाः प्रस्तुतमिम चम्पू–प्रबन्धं सम्पूर्णं समीक्ष्य, निन्दितुं निन्दयितुं वा, नन्दितुं नन्दयितुं वा साधिकारा भवन्ति ते; न तु केवलं नवीन-कालीनं काव्यमिति काव्य–स्य नाम्नः श्रवण–मात्रेण।[2]

## कोऽयं कविः ?

शिशुशिलापुराऽर्थक–कन्दगल्ल इति ग्राम–स्थित–शीलवन्तमठी–यस्य कन्दगल्ल पर्वतसुधी–कवेर्जन्मस्थानं प्राथमिकाऽध्ययन-स्थानं च कन्दगल्ल नामको ग्रामः।[3] कवेर्जननी नीलम्माम्बा; जनकश्च शिव-

---

1 क० च० चं० प्र० १-९;

2 क० च० चं० प्र० १-१०;

3 भौगोलिकरीत्याऽधुना कन्दगल्लग्रामो हि दक्षिणभारते, कर्णाटकराज्य, विजापुरजिल्लान्तर्गत·हूनगुन्द-तालूके, मुदगल्ल-समीपेऽस्ति।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


बसवार्यशास्त्री। कवेः प्रौढ-शिक्षणं तु बल्लारीनगरे सक्करीकरडीश संस्थापितायां "श्रीगुरुनिवास-संस्कृत-पाठशाला"ख्य-विद्या-संस्थायाम् अभवत्। संस्कृत-कन्नडादि-भाषास्विव सङ्गीतेऽपि कवेर्विशिष्टा परिणतिरासीत्। कन्दगल्लवासी कविः कालान्तरे "गेज्जलगट्टा" नामक-ग्रामं निजनिवासं कृतवान्। किन्तु, अन्तिम-समये पुनः सः "जन्मभूमिः स्वर्गादपि गरीयसी" इति कन्दगल्लग्रामे एव वास्तव्यं चकारः अत एव सहजमेव तत् समाधि-स्थानं तस्मिन्नेव कन्दगल्ल-ग्रामे विराजते।

कविवंशीयानां कुलदेवस्तु मुदगल्ल-समीप-स्थितो हालभावि-श्रीवीरभद्रेश्वरः।

जीवितकाले कविनाऽनवरतं "करडीश-प्रमादवाणी" "महान्तेश-स्याऽऽशीर्वादः" इति स्मृतं श्रूयते।

"करडीश-चरिताऽमृत-चम्पूप्रबन्धो"ऽयं कविना गेज्जलगट्टीग्राम-वास्तव्ये विरचिता।

चित्रगी-श्रीमन्महान्तेश-चरित-चम्पूप्रबन्धस्तु कविनाऽऽत्मनोऽन्तिम-समये कन्दगल्लग्रामे रचितः।

कवेर्ग्रामः

कवेर्जन्म-स्थानं 'कन्दगल्ल' इति कीर्त्यते: कन्दगल्लाख्य-ग्रामस्थ "कन्दगल्ल" इति पदस्य पर्याय-पदानि कवि-लिखितासु चतुर्विंशति-कृतीषूक्तानि बहूनि सन्ति। अर्भक-शिलापुरम्[1], अर्भक-शिलापुरी;[2] अर्भकाऽश्मपुरम्;[3]

---

1 श्रीकृष्णा-मलहारिणी-श्रीसङ्गमेश्वर-महाऽष्टकम्, श्लोक; ९;

2 श्रीमच्चित्रगि-श्रीमन्महान्त-यतिराजवराऽष्टकम्, श्लोकः ११; शरणबसव-सदष्टकम्, श्लोकः ९;

3 गिरि श्रीमल्लिकार्जुन-महाऽष्टकम्, श्लोकः ९;

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


बालशिला[1]; बालशिलापुरम्[2]; बालशिलापुरी;[3] बालाऽश्म,[4] बालाऽश्मपुरम्;[5] बालाश्मपू:;[6] बालोपल:,[7] बालोपलपुरम्;[8] बालोपलाख्यपुरम्;[9] शिशुशिलापुरम्;[10] शिशुशिलापुरी;[11] शिशूपल:;[12] शिशूपलपुरम्;[13] शिशुशैल:[14] इति।

# कवि-लेखनी-वैखरी

श्रीपर्वत-सुधी-प्रोक्ते । नव- (९) स्तवक-मण्डिते ॥
प्रबन्धेऽत्राऽर्थ-गाम्भीर्यं । सर्वाऽलंङ्कार-भूषणम् ॥१॥

---

1 "अम्बे ! पाहि;" इत्याख्यं पद-गीतम् पद्याऽङ्क: ४; श्रीगव्याऽलदि महान्तस्वामि-प्रभावरुविराऽष्टकम्, श्लोक: १०;

2 क० च० चं० प्र० श्लोक: ९-२१३;
"मङ्गलं भवतु; महेश !" इत्याख्य मङ्गळारति-गीतम् ३; "तुङ्ग-महिमाङ्क ! घन ! मङ्गलम्" इत्याख्यं मङ्गळारति-गीतम्, ४;

3 श्रीसिद्धर्याऽष्टकम् श्लोक: ९;

4 "अम्बेऽगेन्द्र-बाले ! पालय;" इत्याख्य पद्यम्, ३;
"जय; हैमवति-हृदे !" इत्याख्यं मङ्गळारति-पद्यम्, ३;

5 क० च० च० प्र० १-७ (पाठाऽन्तरम्);

6 श्रीदक्षिणामूर्ति-घनाऽष्टकम्, श्लोक: ९; श्रीगिरिपुर (गुञ्दूरु) दोड्डपार्य-पञ्चरत्न-स्तवः, श्लोक: ५;

7 नागभूषण-घनमठवर-भव्याऽष्टकम्, श्लोक: ९;

8 शरणबसवराजाऽष्टकम्, श्लोक: ९;

9 श्रीसिद्धराम-शिवयोगिवराऽष्टकम्, ९;

10 "मङ्गलं भवानि !" इत्याख्यं मङ्गळारति-पद्यं, ३;
अम्बाऽष्टकम्, श्लोक: ९;

11 "जय; जय; गिरिजा-वर !" इत्याख्यं मङ्गलारति-पद्यम्, ३;

12 श्रीकोलूरुपुरीनिवास-वृषेन्द्राऽष्टकम्, श्लोक: ९;

13 श्रीमल्लिकार्जुनवराऽष्टकम्, श्लोक: ९;

14 "मङ्गलं सङ्गमेश्वर !" इत्याख्यं मङ्गळारति-गीतम् ३;

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


आदर्श-गुण-रींतित्व-। छन्दो-विलास-लास्यता: ॥
तत्व-सिद्धान्त-सौन्दर्यं । हृद्य-वर्णन-वैखरी ।।२।।
यानि कानि च शास्त्रोक्त-। पद्धत्याऽऽवश्यकानि च ।।
सर्वाणि काव्य-सम्भाव्य-। लक्षणानीह सन्ति वै ।।३।।[1]

यथाहि- (१) वर्षा-कालीनेतर-समये गगन-स्थितात् मेघात् जल-वर्षणं संशयाऽऽस्पदम् ननु । किन्तु, वर्षा-कालीनां मेघोऽत्यवश्यं सहज--रूपेण वर्षत्येव; नाऽत्र संशयः । तज्जल-वर्षणाज् झारी-नदी-द्वारा जलाशय-सरांसि जल-पूरितानि भवन्ति । जलपूरितानां च तेषां तड़ाग-सरोवरादि-जलाशयानाम् अन्तर्जलं वापीषु प्रस्रवति; कुल्य-द्वारा च क्षेत्राणि प्लावयति । मेघ-जल-वर्षणात् वापी-कूप-तड़ाग-पल्वलादीनां तज्जल-सेवनाच्च तृष्णाऽऽर्तानां प्राणिनाम् ऊष्मा-घर्मो विनश्यति । सहजमेतत् । अस्तु ।

सम्प्रति, "अर्थो (१) वाच्यश्च (२) लक्ष्यश्च । (३) व्यङ्ग्यश्चेति त्रिधा मतः ।।"[2] इति मनसि विन्यस्यैव कविः

"कवि"-सत्-कृति-वार्ष-मेघ-माला-।
स्रवदुद्यद्-रस एष पूर्यमाणः ॥
भुवि सद्-बुध-हृत्-सरस्सु तद्-वाङ्-।
नव-[4]कुल्यासु सरन् हरत्यघोष्म ।: [5]

---

1 ड़ा गुरुसिद्धदेव-नामकेन सम्पादकेन विरचितानि ।
2 साहित्य-दर्पणः २-२;
3 अत्र चरण-चतुष्टये प्रथम-द्वितीययोः स्वरयोर्मध्ये प्रासार्थं प्रयुक्तानां चतुर्वकाराम् उपस्थितिर्विशेषतो द्रष्टव्या ।
4 "नव" इति शब्दस्य 'नूतन' इत्येकोऽर्थः; अपरोऽर्थस्तु नव-संख्याक इत्यर्थकः ।
5 क० च० च० प्र० १-२०

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


प्रकृते, कविः—कन्दगल्ल—पर्वतसुधी—नामककविः, तेन कृता, सती कृतिः—सत्कृतिः-"करडीश-चरिताऽमृत-चम्पू-प्रबन्धः" इत्याख्या कृतिः, वार्षं-वर्षा—कालीनम्, मेघानां-जलदानाम्, माला-पङ्क्तिः, स्रवात्-प्रस्रवणात्, उद्यत्-उत्थितो, रसः – काव्याऽनुसन्धानादनुभूयमानः काव्य-रसः, एषः पूर्यमाणः, - स्वीकाराऽर्होऽस्ति । अत एव, भुवि-भूलोके, सतां - सदाचारवताम्, बुधानां - बुद्धिमताम्, हृत्-हृदयरूपी, सरःसु, नव-कुल्यासु - चम्पूप्रबन्ध - स्थितेषु नव-लिङ्ग-सङ्केतित-नव - स्तबकेषु, श्रुङ्गार-वीर-करुणाऽद्भुत - हास्यादिरूपः काव्य-सम्बन्धि-नव-संख्याकत्वमापन्ने हृदयङ्गमो रसः, प्रथमम्, वाचकानां हृदयाऽन्तराले सङ्गृहीतो भवति । तदनन्तरम्, तद्वाण्या-बुधानां बोधनशील-वाण्या, च कुल्यासु, नव-स्तवकेषु वा । अनभिज्ञरूप-नूतनेषु सामान्य-जनेष्विति यावत् । तत्काव्य-रसः स्वयं सरलतया तरलतया हित-मिततया च सरन् सन्, तत्स्पर्शनात् तत्स्नानात् तत्पानाच्च सञ्चित-प्रारब्ध-आगामिरूपं अघम् अघरूपोष्म च हरति ।

अत्र फलितोऽयमर्थः यत्—वार्षं-कालीन-मेघमालावदियं चम्पूप्रबन्ध-कृतिः सद्बुधहृदयङ्गम-बोधनेन सामान्य-जनानामपि, अज्ञानाऽन्धकार-पापरूपं घर्मं परिहरत्यवेति, चम्पूप्रबन्धस्याऽस्य निबन्धनेऽनुबन्धन-सम्बन्धित्व ऋणाऽनुबन्धोऽवबुद्ध्यते । अलम् अति-विस्तरेण ।

(२) काव्य - रसस्योत्कर्ष—हेतवोऽनुप्रासोपमादयः शब्दाऽलङ्कारा अर्थाऽलङ्कारा उभयाऽलङ्काराश्च चम्पूप्रबन्धेऽस्मिन्, तत्र-तत्र अलङ्कार—भूषणरूपेण सहजमेव समलङ्कृता एव ।

(३) साहित्यदर्पणकार - विश्वनाथकविराजोक्त-रीत्या त्रयो गुणाः; [1] काव्याऽलङ्कारकर्तु—वामनकथिता दश गुणाः;[2]

---

1 "गुणा-माधुर्यमोजोऽथ । प्रसाद इति ते त्रिधा ।।" (साहित्यदर्पणः ८-१)

2 १, ओजः, २, प्रसादम्, ३, श्लेषः, ४. समता, ५, समाधिः, ६, माधुर्यम्, ७, सौकुमार्यम्, ८, उदारता, ९, अभिव्यक्तिः, १०. कान्तिः;

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Koṣha



सरस्वती-कण्ठाऽऽभरणोक्ताश्चतुर्विंशति-गुणाः[1] अत्र ज्ञापितव्याः।

(४) "वैदर्भी चाऽथ गौडी च। पाञ्चाली लाटिका तथा ॥[2]
सा रीतिः स्याच्चतुर्विधा। तासु च रीतिषु, एकस्मिन् ग्रन्थे, एकैका रीतिरेव प्राधान्यतया वक्तव्या; तथापि गौणत्व-रूपेण स्थितानाम् अन्यासामपि रीतीनां सद्भाव-कथने नहि काऽपि बाधा बाधते।

(५) "करण-त्रय-
कलित-नयाम्;
करुणाऽपाऽङ्गाम्;
कलावलीढाऽङ्गीम्; ।
कान्ताम् समाऽनुगाम् भुवि
-पञ्च-ककारां सतीम्
कृती लभते ॥"[3] (आर्या-वृत्तम्)[4];

---

1 "सरस्वती-कण्ठाऽऽभरण"-कारोक्तेषु चतुर्विंशति-गुणेषु काव्याऽलङ्कार-कर्तृणा स्वीकृता दश गुणा उक्ताः; अवशिष्टाश्चतुर्दश गुणा एतेऽधुना उच्यन्ते। दश- चतुर्दश च महत्य-चतुर्विंशति गुणा ज्ञेयाः ११. उदात्तता, १२. और्जित्यम्, १३. प्रेयः, १४. सुशब्दता, १५. सौक्ष्म्यम्, १६. गाम्भीर्यम्, १७. विस्तरः, १८. संक्षेपः, १९. सम्मितत्वम्, २०. भाविकम्, २१. गतिः, २२. रीतिः, २३. उक्तिः, २४. प्रौढिश्चेति चतुर्विंशति गुणा गणिताः।

2 साहित्य-दर्पणः ९-२;

3 क० च० चं० प्र० ५-१२;

4 आर्या-वृत्त-लक्षणम् :-

"लक्ष्मैतत् सप्तगणा गोपेता भवति नेह विषमे जः।
षष्ठे जश्च न लघु वा प्रथमेऽर्द्धे नियतमार्यायाः ॥
षष्ठे द्वितीया-लात् परके न्-ले मुख-लच्च स यति पद-नियमः।
चरमेऽर्द्धे पञ्चमके तरमाद् इह भवति षष्ठो लः ॥"

(छन्दोमञ्जरी ५-१;२)

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


॥ "अम्बा" वृत्तम् ॥ [1]

शाटीं शाचि-प्रसव-पेटीं सरस्वति-सुवीटीं समानय; रमे ! ।
धाटी जिताऽब्ज-भव-घोटीं विहाय रति पाटीरमर्पय; जवात् ॥
सा टीकते; कथय; खेटीदृतं दिशतु को टीरमित्यनुचरत्- ।
चेटी-कृताऽमर-वधूटी-नवोक्ति-परिपाटी निषक्त-हृदया ॥[2]

(६) तत्त्व-सिद्धान्तयोः सौन्दर्यम् (७) हृद्य-वर्णन-वैखरीं च (८) तथाऽन्यैरपेक्ष्यमाणानि, (९) अन्यान्यपि सुयोग्यानि, उदाहरणानि चम्पू-प्रबन्धेऽस्मिन् लब्धव्यानि । उदाहरणार्थमत्रैव ४-१०८, ६-१६ प्रभृति-स्थानेषु द्रष्टुं तत्र-तत्र बहुत्रोपलभ्यन्ते ।

अत एवाऽत्र परा, पश्यन्ती, मध्यमा-वाक्-सम्बन्धिनी वैखरी वाक् तु कविलेखनी-द्वारा लिपि-बद्धा सती द्रष्टॄणां लोचनयोः सुलोचनाऽनुसारिणीव वाणी वैखरीवाणी ।

"प्रमदनमदमराऽसुरेन्द्र ..... रुन्द्र-परशिव-पद-नखचन्द्र-निःसरद पार-कृपारस-झरी-चञ्चच्चन्द्रिका-चकोरायमान मानस-सरस-कविता-कुतुकित- "पर्वत - सुधी-" विरचित "श्रीमन्महान्तेश - चरित - चम्पू-प्रबन्धे" सरस-वाक्-सुबन्धे, द्वितीय-मञ्जरी" ![3]

कविनैव कवि-कृति-परिचयः

"विनमदमरवर-निकर-मौलिमणि-प्रभा-पाटल- पटल-परशिव-पदारविन्द-स्यन्ददमन्द-कृपारस-मरन्दझरी - परितृप्तिमदुरेन्दिरायमान-मानस-सरस-कविता-कुतुका-कलित-पर्वतसुधीः ।"[4]

---

1 "अम्बा" वृत्त-लक्षणम्:
"अम्बाऽभिधेयमिदमुक्तं तभौ यजसरा नो लघुश्च चरणे ।"
(डा० गुरुसिद्धदेव-विरचितम्)

2 अम्बाऽष्टकम्, श्लोकः;

3 चित्रगि-श्रीमन्- महान्तेश-चरित-चम्पू-प्रबन्धः;

4 क० च० चं० प्र० पृष्ठ-संख्या :- १८, ३९, ६१, ८२, १०४, १२२, १३९, १५८, २०८;

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



"मल्लिकार्जुन – महाविबुधेशाऽनुग्रहप्रभावाऽढ्यो दिव्याऽऽगम-धन्यो गिरिमान्यो यः पर्वताख्य-धीरोऽहम् ।"[1]

"श्रीमद्रेणुक – सज्जद्गुरु–महासूत्रः पवित्रो मुदश्मोद्बालाश्म-पुर-स्फुरन्मठ-सरोहंसः प्रशंसालयः ।"[2]

"विद्याऽनवद्याऽमृत-पूत चेताः ..... पर्वतः सन्"[3] करडीश्वरस्य चित्रं चरित्रं प्राह ।

"बालाश्मपू :- पर्वतधीमदुक्तम्"[4] अष्टकम् । "ईशभक्ति-व्यासङ्गिना, अर्भक-शिलापुर-पर्वतेन धीसङ्गतः कृतम् ।"[5]

"सतताऽऽनताऽऽमय-विताऽनघेशाऽर्चनाऽऽकुलार्भक-शिलापुरीमठ-विलासभाक् पर्वतस्तताम ।"[6]

"उदार-स्पृहः किलाऽर्भकशिलापुरी - निलयपर्वताऽऽख्यं-सुधीः, अतनोत् ।"[7]

"लीलाऽङ्काऽऽलाप – बालोपलमठशिवपत्–पर्व - हृत् पर्वतेनाऽऽभाणि ।"[8]

"श्रीमद्बालशिला - लसन् -मुदुपाऽ-भ्राजज्-जयश्री - स्थिरोद्दाम-ग्राम–मठाऽऽर्य–पर्वत–सुधी - प्रोक्तम् ।"[9]

---

1 क० चं चं० प्र० ९-२२५;
2 क० च० चं० प्र० १-७;
3 क० च० चं प्र० १-८;
4 श्रीदक्षिणामूर्तिघनाऽष्टकम्; श्लोकः ९;
5 श्रीकृष्णा-मलहारिणी-श्रीसङ्गमेश्वर–महाऽष्टकम्; श्लोकः ९;
6 श्रीमच्चित्रगि-श्रीमन्महान्त-यतिराजवराऽष्टकम्; श्लोकः ११;
7 शरण-बसव–सदष्टकम्; श्लोकः ९;
8 नागभूषण-घनमठवर-भव्याऽष्टकम्; श्लोकः ९;
9 श्रीभव्यालदि-महान्तस्वामि-प्रभाव-रुचिराऽष्टकम्; श्लोकः १०;

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


"ईशभक्ति-स्थेमाऽर्भकाऽश्मपुर-पर्वत-धीमदुक्तम्" [1]

"बालशिलापुरी-पर्वत पोर्त-गीतम् ।" [2]

"शिशूपलपुराऽऽलय-पर्वतेन प्रोक्तम् ।" [3]

"तत्र-पादाऽब्ज-सन्मधु-मधुव्रत - मानसेन बालोपलाऽऽख्यपुर-पर्वत-शावकेन प्रोक्तम् ।" [4]

"पर्वत धीमता मुदा-व्यरचि ।" [5]

"लीला - लोलेन बलोपलपुर - विदुषाऽखर्व - वित् - पर्वतेन प्रोक्तत्" ।[6]

"शिशुशिलापुर-पर्वताख्य-संख्यावता निगदितम्" ।[7]

"शिशूपलोत्सता, पर्वत धीमता, रचितम् ।"[8]

"अनभिज्ञ-चित्तोत्सव-नव कविताशालिना शीलिन श्रीमद्बालाऽश्मपूः-सन्मठ - वसति - लसच्छर्व-मुत्-पर्वताख्य- प्राज्ञेन" दोड्ड्पार्यः श्लाधितः . [9]

कवेः कृति-ततिः

कन्दगस्लपर्वतसुधीकवि-विरचितास्वन्यतमासु कृतिषु संस्कृत-कृतयश्चतुर्विंशति-संख्याकाः सम्प्राप्ताः । तासां नामानीमानि ।

(अ) बृहद्ग्रन्थौ : (१) करडीशचरिताऽमृत चम्पूप्रबन्धः;

---

1 गिरि श्री मल्लिकार्जुन-महाऽष्टकम्; श्लोकः ९;

2 श्रीसिद्धवर्याऽष्टकम्; श्लोक ९;

3 श्रीमल्लिकार्जुन वराऽष्टकम्; श्लोकः ९;

4 श्रीसिद्धराम शिवयोगीवराऽष्टकम्; श्लोकः ९;

5 वीरेश्वरऽष्टकम्; श्लोकः ९;

6 शरणबसवराजाऽष्टकम्; श्लोकः ९;

7 अम्बाऽकम्; श्लोकः ९;

8 श्रीकोलूरु पुरीनिवास-वृषेन्द्राऽष्टकम्; श्लोकौ ९; १०;

9 श्रीगिरिपुर (गुड्डूर) दोड्ड्पार्य-पञ्चरत्न-स्तवः ; श्लोकः ५

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


(२). चित्रगी-श्रीमन्महान्तेश चरित-चम्पूप्रबन्धः ।

((आ)) अष्टकानि : (३) अम्बाष्टकम्;
(४) गिरि श्रीमल्लिकार्जुन-महाष्टकम्;
(५) नागभूषण-घनमठवर-भव्याष्टकम्;
(६) शरणबसवराजाष्टकम्;
(७) शरणबसवसदष्टकम्;
(८) श्रीकृष्णा-मलहारिणी-श्रीसङ्गमेश्वर-महाष्टकम्;
(९) श्रीकोलूरुपुरीनिवास-वृषेन्द्राष्टकम्;
(१०) श्री गिरिपुर (गुडदूर) दोड्डपार्य-पञ्चरत्नस्तवः
(११) श्रीदक्षिणामूर्ति-घनाष्टकम्;[1]
(१२) श्रीभव्याऽलदि-महान्तस्वामि-प्रभाव-रुचिराष्टकम्;
(१३) श्रीमच्चित्रगि-श्रीमन्महान्तयतिराज-वराष्टकम्;
(१४) श्रीमल्लिकार्जुन-वराष्टकम्;
(१५) श्रीसिद्धरामशिवयोगिवराऽष्टकम्;
(१६) श्रीसिद्धवर्याष्टकम्;

((इ)) गीतानि :- (१७) "अम्बेऽगेन्द्र-बाले ! पालय;"
(१८) "अम्बे ! पाहि;"
(१९) "जय; जय; गिरिजा-वर!"
(२०) "जय; हैमवती-हृदे !"

---

1 "कैलासोपत्यकाऽन्ताऽऽश्रमपद-विलसत् "इत्यारभ्य" दक्षिणा-मूर्ति-मूर्तिः" इत्यन्तं 'स्रगधरा वृत्त'-छन्दो-निबद्धम् अपरं दक्षिणा-मूर्त्यष्टकं-विद्यते; तदन्यत् ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


(२१) "तुङ्ग ! महिमाङ्क-घन ! मङ्गलम्;"
(२२) "मङ्गलं भवतु; महेश !"
(२३) "मङ्गल", भवानि !"
(२४) "मङ्गलं सङ्गमेश्वर !"

((ई)) अनुपलब्ध-कृति-चतुष्टयम् :– (१) अमरेश्वराष्टकम्; (२) पर–शिव–जङ्गम-सन्दर्शन_स्तोत्रम्; (३) पञ्चमजार्ज–समुद्र–बन्धनम्; (४) सुभाषित–सुधाझरी च ।

कवेर्माता-पितरौ सन्ततिश्च

"श्रीमद्रेणुक-सज्जगद्गुरु-महासूत्रे पवित्रोदयस्य मुद्ग्रावादिपुर-स्फुरन्मठीयस्य"[1] श्रीशिवबसवार्य-शास्त्रिणो धर्मपत्न्यां नीलम्माम्बायां जातोऽयं कविः "कन्दगल्ल–पर्वतसुधी" नामकः। कवेरस्य वंशावलिः संक्षिप्त-रूपेणेत्थं ज्ञायते :–

---

* 1 कवेरग्रजोऽयं मल्लिकार्जुन शास्त्री–प्रथमः प्रथममारमनः प्राथमिकाभ्यासाऽनन्तरं स्व–ग्रामात् संस्कृतस्योन्नताऽध्यनार्थं काशीं गतः, तत्राऽर्थव्यवस्थाया अव्यवस्था–वशात् बल्लारीनगरे एव स्थित्वा, करडीश–कृत-सुव्यस्थावलात् मैसूर महाराज्ञः आस्थानात् करडीशपाठशालयाम् आगतैर्विद्वद्राजगोपालाचार्याख्य-विद्वद्भिरध्ययनं परिपूर्णं कृतवान् । एतन्मल्लिकार्जुन-विबुधेन्द्र–विरचिताश्चतुर्दशश्लोका अत्रैव चम्पूप्रबन्धे नवमे स्तबके २२९ श्लोकाऽनन्तंर चम्पूप्रबन्धकविनैव स्वयमुद्धृताः।

2 बल्लारी समीपस्थे "कोड़ालाख्य ग्रामे" "आनेगुंदि"–राजगुरुवंशीययोर्दम्पत्योरेकैका पुत्री;

3 हुनगुन्दसमीप-स्थिते "तुम्ब" नामक-ग्रामे, आलूर-हिरेमठीयस्य भार्या; सन्तान–रहिता साध्वी;

4 अस्याः समाधिः "गंज्जलगट्टि" ग्रामेऽस्ति । कवेर्वास्तव्यं यदा परळी–प्रकरणार्थं हंवरावादे असीत् तदा, अस्याः पञ्चत्व-प्राप्तिः समभवदिति श्रूयते ।

5 वेदमूर्तिशास्त्री–प्रभृतयः पञ्चाऽध्यधुनाध्यन-शीलाश्छात्राः ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



शिवबसवार्यशास्त्री–प्रथमः (कवेः पिता) ;
(पत्नी–नीलम्मामबा) (कवेर्माता);

मल्लिकार्जुनशास्त्री-प्रथमः; (कवेरग्रजः);[1]
(अथवा अमरनाथशास्त्री–प्रथमः)
((दाराः–नाम ?))
पुत्री मल्लम्मामबा[3] प्रथमा;

कन्दगल्ल पर्वतसुधीः (कविः);
((पत्नी-बसवम्मामबा[2])) प्रथमा;

बसवम्मा-(कवेरनुजा)
द्वितीया

चन्नवीरशास्त्री (कवेः पुत्रः);
((पत्नी : चन्नवीरम्मामबा))

नीलाम्बिका (कवेः पुत्री)[4]
((पतिः वीरभद्रय्यः))
((पुत्रः शिवसङ्गय्यः));

शिवबसवशास्त्री-द्वितीयः
(कवेः प्रथमः पौत्रः)
((पत्नी : मल्लम्मामबा))–द्वितीया;

पर्वतशास्त्री- द्वितीयः;
(कवेः द्वितीयःपौत्रः);
((पत्नी : नागरत्नम्मामबा))

हम्पम्मा
(कवेः पौत्री)

वेदमूर्ति शास्त्री;[5] (कवेः प्रथम-प्रपौत्रः);

चन्नवीरशास्त्री-द्वितीयः; (कवेर्द्वितीय-प्रपौत्रः)

मल्लिकार्जुनशास्त्री-द्वितीयः; अथवा अमरनाथशास्त्री-द्वितीयः (कवेस्तृतीय-प्रपौत्रः)

जटाधरशास्त्री; (कवेश्चतुर्थ-प्रपौत्रः)

बसवराजेश्वरी (कवेः प्रपौत्री)

* See Foot-Notes on 26th Page.

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


कवि-कृतम् अध्ययनम् अध्यापनञ्च

"साहित्य-सङ्गीत-कला-प्रवीणः ।
साक्षात् प्रभुः प्रच्छय-विषाद-हीनः ॥"[1] कन्दगल्ल-पर्वतसुधी-कविः ।

साहित्य-सङ्गीत-कलादि-विविध-विषयेषु सम्यगधीत्य, तत्पारङ्गतस्य कवेः, अध्यापकेषु द्वे नामनी मुख्यतया गणनीये स्तः । तत्रैकं नाम श्रीविद्वद्राजगोपालाऽऽचार्यस्य; द्वितीयं नाम तु कवेरग्रजस्य मल्लिकार्जुन-मनीषिणः ।

अत्रोक्तयोरुभयोर्नाम्नोर्निर्वचने कवि-वचनं वचनीयम् ।

(१) "करडीश्वरः स्वयमेक एव पाठशालां गत्वा' नत्वा च त मल्लिकार्जुन-मनीषिणम्, आखण्डलमिव विबुधेन्द्र-जिष्णुं, रहः, विहसन्-'भवन्त, तावद् अभ्यस्त-समस्त-कला-विलासेनैव कुलाऽन्तर-कलानिधि-महा-प्रोत्सारक-राजत्-तेजो - भास्वन्तः; ............ पुनश्च, युष्मदध्यापका ह्ययस्मदीया विद्वद्राजगोपालाऽऽचार्याः, महिशूरराज-दत्तेन-

"तर्काऽलङ्कार-कान्तार-। भ्राम्यन्-मत्तेभ-केसरी ॥
श्रीविद्वद्-राजगोपालाऽऽ-। चार्य-वर्यो विराजते ॥"
इति बिरुदेन समं समञ्चिताः । '[2]

(२) कवेः, तत्सहपाठि-विद्यार्थिनां चाऽभ्यास-सामर्थ्यम्-
"अभ्यस्याऽभ्यस्य वेदे फणिपति-फणितौ चाऽक्षपादाऽक्षतोक्तौ ।

---

1 "साहित्य-सङ्गीत-कला-विहीनः ।
साक्षात् पशुः पुच्छ-विषाण-हीनः ॥"
इत्यस्य सुभाषितस्य परिवर्तनमिदं सम्पादकेन गुरुमिद्धदेवेनाऽत्र कवि-पक्षे कृतम् ।

2 क० च चं० प्र० ९-१९३;

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


शुम्भद्-गाम्भीर्यं - माध्वी-रुचिर-रस-ललत् - काव्य - सत्काव्य-केल्याम् ।। शुद्धे सद्धर्म-शास्त्रे सुललित-कविता-कौशले पेशले वा । राजद् - राजाऽच्छ - तेजो विशदतम - यशो-मण्डिताः पण्डिताः स्युः ।।"[1]

तत्र कवेरग्रजस्याऽग्र-गण्यत्वम्-
"मुदुपल-बालशिलापुर-विदित-मठाद्यादि-वसति-लसितः सः ।।
श्रीमल्लिकार्जुनसुधीर् धीमन्मणिरभवदभव-मत-विभवः ।।"[2]

अध्ययनशीलेन कविना क्रम-प्राप्तस्य धन्यत्वस्य मान्यत्वस्य धीरत्वस्य च कविनैव स्वयं सूचना :-

"तन्मल्लिकार्जुन-महा-विबुधेशाऽनुग्रह-प्रभावाऽऽढ्यः ।।
दिव्याऽऽगम-धन्यो गिरि-मान्यो यः पर्वताऽऽख्य-धीरोऽहम् ।।[3]

अन्ते च कवि-कृत-पद-प्रयोगस्य फल-श्रुतिः "नन्दीड्-भक्ति सुधाऽभिषेचन-लसत्-सत्कर्म-सस्याऽऽढ्य-हृद्-।

वल्लारि-स्थ-करड्यधीश-करुणा-प्रोद्दाम-विद्या-जुषः ।।
नित्यं पर्वत-धीमतः प्रतिपदं कांक्षत्-फलाऽऽलि-प्रदम् ।"[4]

कन्दगल्ल - पर्वतसुधीकविना मुख्यतया संस्कृत-भाषा-विद्याम् अधीतवन्त एते महानुभावा मुख्याः गुरुबसवशास्त्री हिरेमठ इलकल्ल; डा० चन्द्रशेखरशास्त्री अमरावती मूदेनूरु; वे० करिबसवय्यः हिरेमठ कम्बळीहाळ; वे० गुरुपादय्यः सन्तेकेलूरु; वे० चन्नवीरार्यः इलालापुर;

---

1 क० च० चं० प्र० ९-२११;
2 क० च० चं प्र० ९-२१३;
3 क० च० च० प्र० ९-२२५;
4 कविकृत श्रीकोलूरुपुरीनिवास-वृषेन्द्राऽष्टकम्; श्लोकः ८;

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


वे० मड़िवाळार्यः सन्तेचेलूरु; श्रीम० नि० प्र० कोप्पद-महान्तस्वामिनः चित्रगी-इलकल्ल; श्री ष० ब्र० शान्तवीरस्वामिनः हिरेमठ अलदी; हुक्केरी-सदाशिवशास्त्री; हेप्पूरु-अमरार्य-प्रभृतयः पुरुषाः। सोल्लापुर-रुद्रम्माम्बा च पूज्यासु महिलासु प्रमुखा। रुद्रम्माम्बाया अध्यापन-समये कवेर्वासो हि तन्नगरप्रमुखस्य वारदमल्लप्पाख्यस्य गृहे; केवल-मध्यापनं तु वीरेश्वरशरणानां निवासे सम्पन्नमिति।

चित्रगीसंस्थानमठीय-हुनगुन्दशाखा-महान्तेशमठे तत्कालीन-मठा-धीशानां श्रीविजयमहान्त-(मळेयप्पार्य) स्वामिनाम् आज्ञानुसारेण मठीय-संस्कृत-पाठशालायाम् अनेन कविना वर्षत्रयं यावत् अध्यापन-कार्यस्य स्वीकृतिः। तत्सम्भावना-रूपेण, अशन-वसन-वसतिप्रभृति-सौकर्यं तथा पञ्चशत-रौप्यकमितं वर्षाशनं च स्वामिभिः कृपा-पूर्वकं प्रदत्तं धनं कविना स्वीकृतम्। पाठशालायाः कर्तव्यात्, निवृत्त्यनन्तर-मपि, इलकल्ल मठात् प्रत्यब्द पञ्चशतरौप्यात्मिका सम्भावना कविना स्व-निधन-पर्यन्तं निरन्तरं प्राप्ता।

तस्मिन्नेव च हुनगुन्दग्रामे तत्रत्येन "तहसीलदार" इत्यधिकार-प्राप्तेन ब्राह्मण समाजीय-सद्भक्तेनैकदा श्री विजयमहान्तस्वामिभ्यो चीनाऽम्बरमेकं ("रेशमी-पटगा") भक्त्या प्रदत्तम्। तद् वस्त्र स्वीकु-र्वद्भिः पूज्यस्वामिभिस्तद् भक्तस्य समक्षमेवाऽत्यानन्देन कवयेऽस्मै, आशीर्वादरूपेण तद्वस्त्रं प्रदत्तम्। कविर्हि आत्मनः शिवैक्यता-प्राप्ति पर्यन्तं तद् वस्त्रं श्रद्धया धारितवान्। तद्वस्त्रं चाऽधुनाऽपि कविवंशीयैः सुरक्षितं स्थापितमिति श्रूयते।

कवेः स्थितिरुपस्थितिश्च

मलप्रभानदी-दक्षिणेतर-तीरे, नद्या जल-प्रपात-स्थान-निकटे, पट्टदकल्ल-बनशङ्करी-महाकूट-क्षेत्राणां समीपे विजापुरजिल्लान्तर्गत-बदामीतालूक-स्थितस्य श्रीमद्-वीरशैव-शिवयोगमन्दिराख्य-पुण्यक्षेत्रस्य

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


संस्थापना-दिवसे रथ-सप्तमीतिथौ शिलान्यास-समारम्भे स्थान-निर्देशक-श्रीचित्रगीलकल्ल–पूज्यानां, तत्संस्था-संस्थापक-श्री हानुगल्ल-पूज्या–नाम् एवम् इतर-पूज्यानां गण्य-मान्य-सद्भक्तानां समक्षं कविनाऽनेन तत्सम्बन्धि-क्रियमाणं वैदिक-पौरोहित्यविधानं कृतम् ।

श्रीगुड्डूर–दोड्डपार्यस्य कृपया तेनैव समाचरिते सज्जलगुड्ड–अम्माया लिङ्गधारणाऽनन्तरं समालोचन–प्रसङ्गे तत्कृत-लिङ्गधारण-पक्षे कवेर्निर्धारः प्रोत्साहश्च ।

सोल्लापुरे वारद-मल्लप्पाख्यस्य सद्भक्ताऽग्रेसरस्य गृहे तत्समये प्रतिवर्षं मासत्रयपर्यन्तं कवेर्वासः । तस्य वीरशैवस्य मल्लप्पस्य गृहे विवाह-समये तद्वंशीय–वीरशैव कुलगुरुभिरेव मङ्गलसूत्रादीनां धार्मिक-संस्कारः कारयितव्य इति कवेरनुरोधाऽनुसारेण तेन मल्लप्पेन तथैव कारितः । तन्मल्लप्पकृत–विज्ञापनां स्वीकृत्य कविना तत्संस्कारः सम्यक् समाचरितः ।

इलकल्लनगरे चित्रगी–विजयमहान्तस्वामिनां लिङ्गैक्य-समये, विरोधिकृत नाम–संवत्सरे, कार्तिकमासे, शुक्लपक्षे, शुक्रवासरे, पञ्चमी-तिथौ, हानुगल्ल श्री पूज्यानाम् आज्ञामादाय कविना विजय–महान्त-स्वामिनाम् अन्त्यक्रिया-सम्बन्धि - ताम्रपत्राक्षर - लेखनादि-समाधिक्रि-यायाः कर्तव्यं कविनाऽत्यन्त – भक्तिपुरःसरं आत्म–सहपाठिजीवन–स्मरणपूर्वकं कृतम् ।

अनिष्टं नष्टम्, सृष्टमष्टकम्

'कविविरचितमिति' श्रूयमाणस्य ''अमरेश्वराऽष्टक''स्य रचनाया भूमिकेत्थं श्रूयते : कवेः पुत्रः श्रीचन्नवीरशास्त्री नामकः । तस्य चन्न-वीरशास्त्रिणो दक्षिणेतर–हस्तो भयङ्कर-बाधा–पीडित आसीदेकदा ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


उपचारोऽपफलो जातः। 'हट्टी' नामकग्रामस्थेन प्रसिद्धाङ्ग्ल-वैद्येन, इतरैरप्यायुर्वेदीय-वैद्यैश्चाऽनियन्त्रिता तद्धस्तस्य वाधा आंग्लवैद्यैस्तु तद्धस्तस्य कर्तनमेव सरलोपाय इति सूचितम्।

दुःखितश्चन्नवीरशास्त्री हि "अमरेश्वरं" श्रद्धया ध्यात्वा, "बाधा निवारिता चेत् अमरेश्वरदर्शनार्थं तत् क्षेत्रं गच्छामि" इति संकल्पं कृतवान्। तत्कृतप्रार्थनाऽनुसारेणैव, तद्बादा शीघ्रमेव निवारिता।

तदनन्तरं स्वस्थेन चन्नवीरशास्त्रिणा साकं कविरेकस्मिन् अमवा–स्या-तिथौ तदमरेश्वरक्षेत्रं गतः। तत्र च कविः स्वयमेव रुद्राध्याय–पठणपूर्वकं तदमरेश्वरलिङ्गस्योपरि रुद्राभिषेकं कृतवान्। तत्पूजायाः समाप्ति–मङ्गलसमये एव "अमरेश्वराऽष्टकम्" रचितवान् कविरिति श्रूयते।

प्रेमादपि कर्तव्यः श्रेयान्

द्वादश-ज्योतिर्लिङ्गेष्वन्यतमस्य परळी-वैजनाथ - ज्योतिर्लिङ्ग-स्याऽर्चना-विषयक-व्याज्ये कविरपि शिवयोगमन्दिर-संस्थापक-पूज्यैः श्रीमन्निरञ्जनप्रणवस्वरूपि-हानुगल्ल-सदाशिव-कुमार - महास्वामिभिः, गौरवपूर्णमामन्त्रितः सन् स गेज्जलगट्टीग्रामात् हैदराबाद-नगरं प्रति तदर्थं गतः। तत्र च सोऽयं कविर्वीरशैव_पक्षे विजयं प्राप्तुं सफल-प्रयत्नशीलः सन् व्याज्यस्य समाप्ति-पर्यन्तं हानुगल्लपूज्यानामादेशानु–सारेण तत्रैव हैदराबाद-नगरे वास्तव्यं कृतवान्। गेज्जलगट्टीग्रामे, आत्मपुत्री-मरण-वार्तां श्रुत्वाऽपि तद्–धार्मिक-व्याज्याऽऽसक्तः कविः गेज्जलगट्टीग्रामं नाऽऽगतः; हैदराबादे एव स्थित्वा, सः 'पुत्री-प्रेमादपि समाज–सेवा·कर्तव्यः श्रेयान्' इति दर्शितवान्।

तस्मिन्नेव वास्तव्य-समये कविरेकदा हैदराबादीय-नवाब-आला हजरताख्येनाऽऽहूतः। तस्याऽऽस्थान-सभायाम् एकदा कविस्तत्रैव स्व–विरचित-स्यैकस्यैव श्लोकस्य सप्रसङ्गम् ससन्दर्भम् षड्विधम् अर्थं प्रतिपादयामास।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


तत्त्वज्ञातस्याऽऽदान प्रदानं च

इलकल्ल श्री–गुड्डूरदोड्डपार्य-सन्तेकेलूर घनमठदार्यं-सोलापुर वीरेश्वरशरण-हानुगल्ल श्रीप्रभृतीनां पूज्यानां सान्निध्य शिवानुभवस्य परम–रहस्यार्थः कविना सम्यग् ज्ञातः ।

कन्दगल्लनाडगौडः, गेज्जलगट्टी जहगीरदार वेङ्कटरायः, ताळी-कोटे सज्जनवंशीय श्रीमान्, विश्वकर्म समाजीय देवगिरि लक्ष्मय्यः, सज्जलगुड्ड शरणम्मामबा, सन्तेकेलूरु हेसरूरु दोड्डप्प सोल्लापुर वारदमल्लप्पः, इतरे सामाजिकप्रमुखाश्च कविकृतं तात्त्विक–जिज्ञासा-समाधान-निरूपणं विशिष्टप्रसङ्गे वैयक्तिकरूपेणाऽपि वारं-वारं चर्चां कृत्वा, समालोच्य, तत्त्वज्ञानविषये लाभान्विता अभवन् ।

होसपेटे-हम्पि-कोडगलि – लिङ्गसुगूरु–प्रभृतिग्रामेषु प्रत्येकग्रामे मासत्रयं यावत् बसवपुराण-प्रवचनं तत्त्वज्ञान- प्रसारार्थं ससङ्गीतं कृतवान् स कृतकृत्यः कविः ।

पूज्य श्रीविजयमहान्तस्वामिनां लिङ्गैक्याऽनन्तरमपि, इलकल्ल मठात् प्रत्यब्दं प्राप्यं कविसम्भावना–रूप पञ्चशत–रौप्यकात्मकं धनं स्वीकर्तुं, इलकल्लनगरे स्थिते दिने, इलकल्ल-सक्करी–शङ्करप्पाख्यः सद्भक्तः, इलकल्ल – हिरेमठीय – गुरुबसवशास्त्रीद्वारा कवि–सकाशे समस्या–पूर्तिश्लोकमेकं पेषितवान् । तत् समस्या-पूर्तिं कर्तुम् तत् श्लोकस्याऽ परमर्धं भागं कविर्विरच्य, तस्याऽर्थमपि तत् सभायां विशदी-चकार ।

शिवकवेः शिवैक्यत्वम्

अष्टाविंशति– कृतिकर्ता कन्दगल्ल – पर्वतसुधी नामकः कविः, आत्मनो द्वासप्ततितमे वयसि, अष्टचत्वारिंशदधिकाऽष्टादश–शततमे

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


(१८४८) श्रीमन्नृप शालिवाहन-शकाब्दे, प्रभवनामसंवत्सरे, सायं-कालीन-पञ्चवादन-समये, आत्मनो जन्म-भूमौ कन्दगल्लग्रामे शिवैक्य-स्वरूपं निधनं प्राप्त ।

निधन-प्राप्तिसमये, कविः पूर्वं स्वरचितं "श्रीमच्चित्रगि विजय-श्रीमन्महान्त - यतिराजवराऽऽष्टकम्" नामक - भक्ति-स्तोत्रं इलकल्ल हिरेमठीय-श्रीगुरुबसवशास्त्री- द्वारा,

"आधाराऽऽदिम-पश्चिमाऽन्त- विलसच्चक्राऽब्ज-पत्रोज्ज्वलत्-।
प्राणोपस्कृत-लिङ्ग-चित्सुख-सुधाऽऽस्वादाऽति-मोदाऽम्बुधिम् ॥
पिण्डादि-स्थल-बोध-साधन-कला-भूषाऽच्छ-भाषानिधिम् ।

निश्चिन्तं निरुपप्लव निरुपमं नित्यं विनुत्यं मुदा ।
वन्दे; तं सतत कृपा-रस-लसत्-स्वान्तं महान्तं प्रभुम् ॥"

इत्यादि उच्चैः स्वरेण गाययन् तदष्टक-नादश्रवणे एव मनो-विलीनरूपं चित्रवृत्ति-निरोधं कृत्वा स शिवकविः शिवतां स्वीकृतवान् !! ।

सम्पादक-कृता निवृतिर्निवृत्तिश्च

कन्दगल्ल-पर्वतसुधीकवि -विरचित- "करडीशचरिताऽमृत-चम्पू-प्रबन्ध-विषये संशोधनार्थम् उपलब्धानि पुस्तकानि चत्वारि । सर्वाण्यपि तानि हस्त-लिखितानि कन्नड-लिपि-युतानि, अपूर्णानि । पाठान्तर-प्रदर्शन-सन्दर्भे-च-तानि "क-ख-ग-घ" इति सङ्केतितानि । 'क' "ख" इति प्रथमे द्वे पुस्तके स्वयं कवि-हस्ताक्षर-लिखिते स्तः । तेषु चत्वारिषु त्रीणि पुस्तकानि । हुब्बल्ली जगद्गुरु-मूरुसाविरमठीय-ग्रन्थालय-स्थितानि । अन्यदेकं तु हुब्बल्ली - अक्कीहोण्ड - होसमठीय-पूज्यैः प्रदत्तम् । पुस्तक-प्रदानं निमित्तीकृत्य द्वयोर्मठयोः पूज्ययोः सान्निध्ये सन्निधे च ताभ्यां नमो नमः ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha




---

* मरिस्वामी तु कलबुरगीस्थ -हिरेमठीय-गुरुबसवदेव-गङ्गाम्बा-दम्पत्योः पुत्ररूपेण कलबुरगी-नगरे जातोऽयं महिमा-पुरुषो बल्लारी वासी ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


ग्रन्थस्याऽस्य सम्पादन-प्रसङ्गे साक्षात् परम्परया वा यैः कैश्चि-दपि, यैन केनाऽपि प्रकारेण लाभाऽन्वितोऽहं, तेषां सर्वेषाम् उपकारं स्मरामि ।

केळदी-राजगुरु-हिरेमठाध्यक्ष पट्टाध्यक्षोऽहं तत्र-तत्र शिष्येभ्यो लिङ्गधारण-शिवदीक्षादि-धार्मिक-संस्कारान् समाचरितुम, शिवानुभव-सभाऽध्यक्षीय-समारोप-भाषणानि च कर्तुम् अनिवार्यतयाऽहम् आसम् देश-सञ्चारे । अतो मुद्रण-समये ममाऽनुपस्थितौ श्रीषडक्षरदेव-सहितो धारवाड़-कर्णाटक-विश्वविद्यालयीयः श्रीपरड्डीमल्लिकार्जुन-महोदयश्चम्पूप्रबन्धस्याऽस्य समग्रं "प्रूफ-रीडिंग" कृत्वा स धन्यवाद-स्वीकाराऽर्होऽस्ति ।

मामत्र सम्पादक-रूपेण नियुज्य, मत्कृतया सफल-साहित्य-सेवया महदानन्दमनुभूय, मत्संस्कृत-पाण्डित्य-गौरवार्थं, फल-ताम्बूल-मन्त्राऽक्षतैः, प्रकटित-पुस्तकैः, सहस्राऽधिक-रौप्यकैश्च साकं, मह्यम् आशिषो दत्वा, काश्मीरोर्ण-वास्त्रेणाऽऽच्छाद्य मां सम्मानितं कृतवद्भ्यस्तत्र-भवद्भ्यो हुब्बल्ली-कृपा-गङ्गाधरराजयोगीन्द्र-जगद्गुरुवरेभ्यः, मण्ड-ळस्य चाऽधिकृद्भ्यः, ज्ञाताऽज्ञात-सहकारिभ्यः, तथा कविचरित्र-दातृ-कनक-गिरिवासी-कन्दगल्ल-शीलवन्तमठीर - श्रीपर्वतय्याय, धारवाड़ सदानन्द मुद्रणालयाधिकारिणे च धन्यवादा मया मुदा समर्पिता इति निर्वृतिं प्रदर्श्य, निवृत्तिं च सविनयं निवेदयामि ।।

राजगुरु-हिरेमठ
केळदी-577401

सम्पादकः
—गुरुसिद्धदेव शिवाचार्यः



CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

करडीश-चरिताऽमृत-चम्पूप्रबन्धे
सारांशरूपा

# विषयाऽनुक्रमणिका

## प्रथमः स्तवकः

प्रथमे स्तवके विषयः पद्य-गद्य-संख्या

नमः मूर्तये, लिङ्गाय, गुरुभ्यश्च;

"करडीशचरिताऽमृतचम्पूप्रबन्ध" ग्रन्थलेखने भद्रं च्छिद्र-रहितं भवितुम् शिव-स्तुत्यात्मकं प्रथम-स्तबकस्याऽऽदिमं मङ्गलम् :-



CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha




CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


चम्पूप्रबन्धेऽस्मिन् मार्कि द्विशत-स्थानेषु, श्लोके गद्य-खण्डे च निराकारत्वं गनानामिव, अदृष्टानां पदानां वाक्यानां श्लोक-चरणानां वा स्थानपूर्तिर्मया सम्पादकरूपेण यथास्थानं यथामति कृता । भूरि-परिश्रम-साध्येयं प्रक्रिया क्रिया कृता मया गुरुकृपया । मत्संयोजितानां पदादीनां प्रदर्शन-सङ्केतोऽत्र वर्तुल-कोण-रेखाङ्कन-स्थाने (पञ्चमे स्तवके तदाधिक्यम्) सुस्पष्टं दृश्यते । उदाहरणम् :- (इ.

(परोपकारी करडीश्वरोऽसौ)
(सद्धर्म-) भानोज्जवल-सत्प्रभा-(वान्) ।
नितान्त-(दीपोत्सव-सम्प्रकाशात्)
(रात्रिं च सम्य-) ग् दिवसं चकार ॥[1]

इत्यादि ।

चम्पूप्रबन्धस्याऽऽदिमे भागे ग्रन्थप्रकाशकस्य श्रीजगद्गुरुगङ्गाधर-धर्मप्रचारक-मण्डळस्याऽध्यक्षाणां हुब्बल्ली मूरुसाविरमठाध्यक्ष-श्रीमन्-महाराजनिरञ्जन-जगद्गुरुवराणां "आशीर्वचनम्", तदनन्तरं चम्पू-प्रबन्धग्रन्थस्य सारांशरूपा विषयाऽनुक्रमणिका मयाऽत्राऽनुबद्धा । संशोधक-दृष्ट्या निवद्धेयम् अनुक्रमणिका मयाऽत्राऽनुबद्धा । ग्रन्थान्तङ्ग-बोधिका गद्यमय-लेखनात्मिका । कथानायकस्य करडीशस्य समग्र-चरित्रयुता सरलेयं विषयाऽवबोधने यथासाध्यं सान्त्वयतीति मन्ये ।

अन्तिमभागेऽनुबन्धे प्रस्तुत-कवि-रचितानि करडीश चरीताऽमृत चम्पूप्रबन्धेऽन्यत्र च कवि-प्रयुक्तानां छन्दसां लक्षण-सहित-नामान्युक्तानि । (३) प्रबन्धोक्त-श्लोकादीनां चाऽऽकाराद्यक्षराऽनु-क्रमणिका संयोजिता ।

---

1 क० च चं० प्र० ५-८२;

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha




CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha




द्वितीयः स्तबकः



CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


नुपारिणा यकार बीजाऽक्षरीय-मध्यकलशाऽधिकारिणा वल्लारी-समीपस्थ-शिरगुप्पा-तालुका"ऽन्तर्गत - "तेक्कलकोटे'-हिरेमाठाऽध्यक्षेण श्रीसिद्धप्पार्याख्येन सक्करी-वशीयानां कुलगुरुणा सक्करी-वसवाख्य-करडीशाय शास्त्रोक्तरीत्या सम्पूर्णं शिवदीक्षा-धार्मिक-
—संस्कार-कर्म सुसम्पन्नमभवत्; .... १०

मातृ - गर्भाज्जननम् एकं जन्म; शिवदीक्षा-संस्कारे गुरु-कर-सञ्जातत्वं द्वितीय जन्म । एवं "जन्म-द्वय-विराजितः" करडीशः सफलाऽऽदरः; कर्मधारय-समासतोऽपि धर्म कर्मधारण-कर्मठश्च सः। तस्य गुरोः करः, तत्करस्य गुरोर्वरद-हस्तस्य "अडि"-भागेऽधोभागे शिष्यस्य करडीशस्याऽवस्थानम् हस्त-मस्तक-संयोगात् "करडिः" (कर+अडि) इति 'मर्मज्ञैः-शास्त्रत-त्वस्य
निर्मितोऽर्थोऽयमादरात्"; ११

धर्मरूप एकः पक्षः, कर्मरूपश्चाऽपरः पक्ष; द्वावपि पक्षौ आचार-विचार-सम्पन्नत्वात् करडीश-विषये सुप्रसिद्धौ । अतः पक्षि-
स्वरूपत्वं कथितम्;' .... १२

करडीश इत्यभिधानं तु कर्णानां कौतुकावहम्; .... १३

एवंरूपस्य करडीशस्य नाम तु कल्याण-कर्म-कलनं खलु; १४

स श्री करडीश्वरो लोके धार्मिक-संस्कारात् "कायक"-शीलत्वाच्च
लिङ्गाऽनुषङ्गाऽङ्गभाग् अभवत्; .... १५

करडीश्वर-विषये श्रीमन्-मरिस्वामि-पदाऽभिधेय-रूपेण शङ्करः
क्षेमङ्कर आसीत्; .... १६

मरिस्वामी हि सङ्गमनाथः; बसवावाख्य-करडीशस्तु द्वितीयः
कल्याण-बसवेश्वरः; .... १७

करडीशेनाऽधीत-सकल-कला-कलापः; .... १८

करडीशस्य तारुण्याऽवस्था-वर्णनम्; .... १९

अनन्तपुरजिल्लाऽन्तर्गतस्य उरुवकोण्ड तालूकस्थितस्य "गडेकल्लु" समीप-सुशोभितस्य "निम्बगल्ला"ख्यस्य ग्रामस्य श्रेष्ठिनां (सेट्टरु)

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha




CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha






CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

# तृतीय: स्तबक:



CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha




CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha






CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

# चतुर्थः स्तबकः

चतुर्थे स्तबके विषयः पद्य-गद्य-सङ्ख्या



CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha




CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha




चतुर्थ-स्तबकीयं-समाप्तिः; ॥



CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

# पञ्चमः स्तबकः

पञ्चमे स्तवके विषयः | पद्य-गद्य-संख्या



CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha




तेषां सर्वेषां पूज्यानां नाम-कथनात् प्रकृत-चम्पूप्रबन्धग्रन्थस्य महद्विस्तारः स्याद् इत्याशङ्कयेव चम्पूप्रबन्धकवि-त्यक्तानि नामानि कल्लूर-सङ्गणणाख्य-कन्नडभाषा-पण्डितेन संशोध्योक्तानि नामानीमानि :-

अङ्कलगी-अडवीसिद्ध-शिवयोगी;
अथणी-गच्चिनमठीयो मुरुगप्प-शिवयोगी;
अनवार-चरबसव-तातः;
आनन्दपुर-मुरुघामठीयो गुरुबसवस्वामी;
एम्मिगनूरु-चडेसिद्ध-तातः;
एळन्दूरु-बसवलिङ्ग-शिवयोगी;
कञ्चूगलबिदिरे-दोड्डज्जय्यवाच्यः प्रभुस्वामी;
गरग-मडिवाळप्पाख्यः शरणः;
तूरमरी-हिरेमठीयो मळेयप्पार्यः;

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha




CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha




CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha





पञ्चम-स्तबकीय-समाप्तिः; ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

# षष्ठः स्तबकः



CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha





CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha







CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

# सप्तमः स्तबकः

सप्तमे-स्तबके विषयः | पद्य-गद्य-संख्या



CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha




CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

# अष्टमः स्तबकः

अष्टमे-स्तबके विषयः पद्य–गद्य–संख्या



CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha




अष्टम-स्तबकीय-समाप्तिः ॥



CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

# नवमः स्तबकः



CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha





CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha




CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha




CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha




CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha




CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha





CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha




संस्कृत-कन्नड-सङ्गीत-वैदिक पौरोहित्य-ज्योतिष्यप्रभृविविद्यामधी-तानां तेषां "श्रीगुरुनिवास-संस्कृत पाठशाला"-सम्बन्धि - सुप्रसिद्ध-छात्राणां, 'करडीशचरिताऽमृत-चम्पूप्रबन्धे'ऽनुक्तानां वर्गीकरणं श्री-कल्लूरु-सङ्गण्णाख्य-महोदयेनेत्थं वर्ग-त्रय-विभागरूपेण कृतम् :- (१) गुरु-विरक्त-देशिकवर्गः, (२) प्राध्यापक-शास्त्रीवर्गः, (३) शिवानु-भवि-शरणवर्गश्चेति ।

तत्र तृतीये वर्गे - अब्बिगेरे-पाठी - फकीरप्पगौडः; अळवण्डी-हिरे-मठीयः सिद्धप्पय्याख्यः; एम्मिगनूरु-हिरेमठीयो-गद्दिगप्पय्य-गायकः; कप्पगल्ल- हिरेमठीयो अय्यप्पार्यः; जक्कलि-दोड्डमेटा-ज्ञानप्पाख्यः; नागरहल्ली-हिरेमठीयः शिवजोगप्पार्यः; शान्तगिरि-हिरेमठीयः पट्टद-प्पार्यः; हड़गलि-हिरेमठीयो वीरप्पार्य-गायकः; ।

द्वितीये च वर्गे - कोडीकोप्प-हिरेमठीयो गुरुलिङ्गशास्त्री; कोळगल्ल-हिरेमठीयो गुरुशान्तशास्त्री; तेरदाळ-विरक्तमठीयो गुरुबसवशास्त्री;

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



ध्याम्पुर-हिरेमठीयो वीरेश्वरशास्त्री; नारयणदेवरकेरे-शिवरात्रिमठीयः सदाशिवशास्त्री; नाल्वार-हिरेमठीयो जगदीशशास्त्री; पगड्दिन्नी-हिरेमठीयाः (१) चन्द्रशेखरशास्त्री, (२) नन्नप्पार्यशास्त्री, (३) पञ्चाक्षरशास्त्री, (४) रुद्रमूर्तिशास्त्री, (५) विरूपाक्षशास्त्री (६) सदाशिवशास्त्रीति षट् शास्त्रिणः; बण्डी-हिरेमठीयो राचोटि शास्त्री; मसूती-जुगती-हिरेमठीयो नीलकण्ठशास्त्री; सन्दिगवाड् - हिरेमठीयो वीरभद्र शास्त्री; हरपनहल्ली-हिरेमठीयो बसवलिङ्गशास्त्री; हिरे-वङ्कलकुण्टी-हिरेमठीयः शिवबसवशास्त्री; ।

प्रथमे तु वर्गे – अब्बिगेरे-धान्य-ओडेयरमठीयो गड्डदप्पार्यः; उज्जयिनी -जगद्गुरु-चन्नबसव-देशिकेन्द्रस्वामी; तिप्पायकोप्प-विरक्तमठीयो मूकप्पस्वामी; तुम्बग्राम- सोप्पीमठीयो गुरुसिद्धार्यः; बल्लारी-जगद्गुरु-कोट्टूरुस्वामीमठीयो मरिकोट्टूरुस्वामी; सोल्लापुर-किरीट-मठीयो निज गुणस्वमी; हावेरी-हुक्केरीमठीयः शिवबसवशिवयोगी;

—एतन्मुख्य-गणान् समावृत-गुणान् करडीशो निजपाठशालाद्वारा हृद्याऽच्छ-विद्या-चणान् कृतवान्; .....



CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


तन्मल्लिकार्जुन-महा - विबुधेशस्य, अनुग्रहबलात् प्रभावाऽऽढ्-यानां विद्यावतां विदुषां केषाञ्चन नामोल्लेखनम् :—



CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha





CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


अष्टत्रिंशदधिकाऽष्टादश-शततमे (१८३८) शालिवाहन-शकाब्दे, नलनाम-संवत्सरे, शुक्रवासरे, अमावास्यां तिथौ स्वयं कन्दगल्ल-"पर्वत"-सुधी नामक-कविनैव पूर्णितेयं चम्पूः;
चम्पुमिमां बुधचयास्तुष्यन्तु, पुष्यन्तु च; ..... २५४

१९१६ (षोड़शाऽधिकैकोनविंशति शततमे) ख्रिस्ताब्दे शुक्रवासरे "कन्दगल्ल-पर्वत-सुधी"-द्वारा सपूर्णा नव-स्तबक-मण्ड़िता सेयं "करडीश-चरिताऽमृत-चम्पूप्रबन्ध" नामिका सत्कृति-
वल्ली "जीयाद् आ-वसुधा-तलम्;" २५५

नवम_स्तबकीय-समाप्तिः; ....

चम्पूप्रबन्ध-ग्रन्थ-परिसमाप्तिश्च ॥

— सपादकः
( ड़ा० गुरुसिद्धदेव शिवाचार्यः )



CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

श्रीगुरुदक्षिणामूर्तये नमः ।
श्रीगुरुबसवलिङ्गाय नमः ।
श्रीगुरुभ्यो नमः ।

करडीश्वर[1]चरितामृत[1]–चम्पूप्रबन्धो लिख्यते । भद्रमच्छिद्रं भूयात् ॥

# प्रथमस्तबकः

श्रीमद्धैमवतीमतीव[3]सुभगप्रेमाऽभिरामां लसद्[3]–
बाल्ये लाल्य[4]पदाऽऽस्पदाऽभ्युदय[4]वाग्योगं च नागाननम् ।
पुत्रं [5]चित्रबलं विलोक्य बलभिन्मान्य सुमान्यं सदा–
मन्दाऽऽनन्दमयश्च यः स सकलान्[5] पायादुमायाः पतिः ॥ १ ॥

कृपारसमपाकृताऽऽपदमपारकाम्यार्थदं
क्रियागुणचयाच्छरीतिदमयालिदं तं मयि ।
विदाय वसुधानले नवसुधाझरीमाधुरीं
शिवे सुविभवेऽम्ब ! सन्दिश जवेन वाग्वैखरीम् ॥ २ ॥

वन्दे नन्दि-सुभृङ्गि–वीर–वृषभ–स्कन्दानमन्दच्छवीन्
शुम्भच्छम्भुमुखोदितान् रविशतद्योतप्रभूतद्युतीन् ।
शान्तान् कान्तकलेवरान् प्रविलसत्कारुण्य–चारु–स्फुर–
न्नेत्रान् गोत्रपतीनतीवविमलान् शुद्धिप्रसिद्धिश्रियै ॥ ३ ॥

---

1 चरिताऽमृते (क–पुस्तके)

2 क्रियतेऽस्य निरन्तरायं मङ्गलं भूयात् (ख–पुस्तके)

3 मधुरप्रेमाऽतिभूमाञ्चितां (ख)

4 पथप्रथाप्रथन (ख)

5 चित्रंतरस्फुरद्बलनिधिं चान्यं सुमान्यं सुरं –
दृष्टस्तुष्टमनाः सनातन गुरुः (ख)

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


सूर्यं चिदम्बरभुवोऽतिनवोरुशौर्यं
सूर्यन्तरायजलदाऽनिलदाढ्र्यंचर्यम् ।
धुर्यन्तकाऽङ्गजरिपोरुपवर्ण्य- धैर्यं
धुर्यं मनोऽनुसर रे [1]गुरुरेवणार्यम्[1] ॥ ४ ॥

रञ्जन्मञ्जुलवक्त्रकञ्जसरदत्यामोदभूमाङ्कवाग्
[2]नव्य–स्तव्य[2] रसोल्लसन्मधुझरीनन्दत्सदिन्दीवरः ।
स्तुत्यो यत्यधिपोऽपि य़ो घनसुदृक्सन्तानकान्तोऽभव–
च्चित्रं चाऽत्र भजे षड़क्षरकविं व्यक्ताऽच्छयुक्तिश्रियै ॥ ५ ॥

गुरुहरचरचरणार्चाचरणस्फुरणसरणिमरणार्थम् ।
धरणीतलाऽवतरणं शरणं सञ्चिन्तयामि करडीशम् ॥ ६ ॥

श्रीमद्रेणुकसज्जगद्गुरुमहा[3]सूत्रे पवित्रोदयान्
मुद्ग्रावादिपुरस्फुरन्मठसरोहंसः[3] [4]प्रशंसाऽऽलयः[4] ।
आसीत् सन्मणिमल्लिकार्जुनसुधीर्हृद्याच्छविद्याधुनी
वार्धिगौंतुममुख्यसूक्तिपदवीसङ्घातिजङ्घालवाक् ॥ ७ ॥

तस्याऽनिभस्याऽनुजनुस्त्वनूनं
विद्याऽनवद्याऽमृतपूतचेताः ।
प्राहाऽखिलोहः किल पर्वतः सन्
चित्रं चरित्रं करडीश्वरस्य ॥ ८ ॥

---

1 गुरुरेणुकार्यम् (ख)

2 वृन्दाऽमन्द (ख)

3 सूत्रः पवित्रो मुदश्मोद्वालाश्मपुरस्फुरन्मठसरोहंसः । (ख)

4 प्रशसाऽऽश्रयः (क)

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


करडीश्वरचरिताऽमृतवेणीं
सत्पर्वताऽऽस्यसंस्रविणीम् ।
[1]पायं पायं सुमनस्सङ्घा–
स्तृप्यन्तु निर्जराः सन्तु ॥ ९ ॥

भव्यस्तव्यगुणाङ्कनेतरि बुधश्राव्ये सुकाव्येऽत्र नो
दोषस्तोषकरो न कश्चिदिति मा चिन्तां भजन्तां खलाः ।
भाव्यो नव्यकृतत्वरूप इह सोऽस्त्येको हि लोकोत्तरो
निन्दाऽऽनन्दपराः समीक्ष्य भुवि तं[2] निन्दन्तु नन्दन्तु वा ॥ १० ॥

एकं श्लोकमरं विरच्य विरसं चैतत्समं नेति साऽऽ–
नन्दो निन्दतु सत्कवीन्द्ररचितं काव्यं खलस्तावता ।
हानिः का न सितं च काचशकलं सच्चन्द्रकान्ताऽश्मनः
काष्ठां श्रेष्ठतमां कलानिधिकलास्यन्ददद्रसस्यैति किम् ॥ ११ ॥

रक्ताः सुदृशां निचये
सक्ताः किल परमगर्हणेऽन्येषाम् ।
मुक्तागुणतत्या चि–
द्युक्ताः सन्तः खला न भेदोऽत्र ॥ १२ ॥

अलग्नः सत्कविं निन्दितुमतिचतुरः किं तथा कर्तुमीष्टे
किञ्चिद्धावल्ययागादमृतकरकलामाक्षिपद्दुर्बकेन ? ।
किं तृप्ताः सच्चकोरा दलति कुवलयं चन्द्रकान्ता द्रवन्ति
स्वच्छं चाऽऽशान्तरालं भवति सकलहृन्मोदसंपादनं च ॥ १३ ॥

---

1 सुमनःसंघाः पायं पायं नन्दन्तु (ख)
2 सुतरां (क)

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


परगुणपरशुच्छिन्नाः परसुयशःप्रापिताऽऽमयाऽऽपन्नाः ।
परसुखदुःखक्लिन्नाः परिजीवन्ति खलाः कथं विपन्नाः ॥ १४ ॥

अल्पत्वगाकृतिषु काकुरसान्वितेषु
दुर्वासनाविसरविस्तृतविग्रहेषु ।
पथ्याहितेषु तु पलाण्डुषु पापिषूद्यत्
सद्वासनाव्यसनमत्र सतां विमौढ्यम् ॥ १५ ॥

न खला यत्र हि निखिलाः सुखलाभाः सम्भवेयुरखिलानाम् ।
चन्दनतरुरतिजगदानन्दनहेतुर्न दन्दशूकाश्चेत् ॥ १६ ॥

सत्काव्यात् सरसात् समुज्वलगुणात् सद्धीरसंवर्णितात्
सम्भूतातुलसदयशः शितमहाशूलातिसंवेदनैः ।
दुर्धर्षातिदुरन्तदुस्तरशुचा दुर्जीविनां जीवनात्
मर्तुं नो शरधिर्नदी न भुवि पूर्णाऽऽपो न कूपोऽथवा ॥ १७ ॥

सुकविप्रतिभासरसीरुहनवसत्कृतिसरोजिनी सरसा ।
सद्बुधसवितृसमीपे दुर्बुधदोषाकरेण किं विलन्ना ॥ २८ ॥

चञ्चन्महः कविकलानिधिसत्कलौघो-
दञ्चत्कृतिप्रचुरचन्द्रिकया प्रमोदः ।
प्राञ्चत्सुधीजनचकोरचयस्य तु स्यात्
किञ्चाऽल्पधीबकचयस्य विसारलिप्सा: ॥ १९ ॥

कविसत्कृतिवार्षमेघमाला-
स्रवदुद्यद्रस एष पूर्यमाणः ।
भुवि सद्बुधहृत्सरस्सु तद्वाङ्-
नवकुल्यासु सरन् हरत्यघोष्म ॥ २० ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


सकलजनमनश्चकोरतृप्तिं सुकरनवरसैः प्रकल्पयन् निभृतम् ।
सुकविकलानिधिरेष त्वकलङ्कश्चन्द्रमसमतिक्रमते ॥ २१ ॥

सगुणा समुचितरीतिः सद्वृत्ता सरसभावसत्यार्था ।
साध्वीव सुकविकविता सद्बुधवर्ण्या सदा सतां सदसि ॥ २२ ॥

कृतिं तु कथयेत् कविः किल तथा बुधाः सादरं
निपीय मधुरं रसं सुखनिमीलिताक्षा मुदा ।
भवेयुरनिशं भृश विशदचन्द्रबिम्बक्षर-
त्सुधारससुपारणापरिणमच्चकोरा यथा ॥ २३ ॥

कान्तं कवीनामतिकोमलोक्तौ
काठिण्यमेतत् किल तत्र तत्र ।
वृन्ते प्रसूनावलिमञ्जरीषु
ग्रन्थिर्यथा सद्दृढचारुबन्धः ॥ २४ ॥

तथा किल सरसकविरचितरुचिररचनावचननिचयनिचुलितम्, सत्काव्यसरसस्थलमिव सरसराजीवरचिताऽऽमोदम्, वनवलयमिव वलयिनागमहितसुमनःप्रियप्रभावबहुलतारञ्जितम्, सर्वसहामण्डलमिव सकलजीववृत्तिसत्तास्थानम्, वियत्तलमिव विपुलभास्वत्कलानिधिमङ्गलसौम्यगुरुकविमुखरुचिरविग्रहम्, सुरुचिरशिवसिद्धरामेश्वरस्थलमिव सुवर्णवल्लीपूरितविशषविधिप्रक्रमम्, महितश्रीशैलप्रावरणमिव मल्लिकार्जुनमहायशोभावहबहुलनदीश्वरप्रमोदास्पदम्; पुनः साम्बसदनाऽङ्गणाऽन्तरालमिव सदक्षरगणसमूहप्रचारसमलङ्कृतम्, सर्वमङ्गलाऽधिष्ठानसल्लक्षणं च, सरोजनाभसद्मेव सदामोदरसभासुराऽलङ्कारसङ्कुलाऽलङ्कृतम्, समुचितश्रीपदविन्यासमनोहरं च, सत्यलोकस्थलमिव संलक्ष्यविधिविशेषविचारसन्तृप्तविबुधजनोरुविनोदमनोज्ञम्, सारसभूमोह्यमानगुणमन्दिरवाग्बन्धुरप्रचारचारुतरं च; पुनः सुत्रामभवनमिव सुवर्णमिव सुरसभावम्, सुजनवृन्दमिव सुललितोद्यानमिव

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


नुमनःसुकरसुत्रयोगालीनसुवृत्तिसुखावहम्, विपिनमिव विपञ्चीतन्त्री–वर्त्मेव विस्फुरन्मधुरध्वनिविराजितं भाति पुनः ख्यातिमयं सातिशयं चैति जयं नौति प्रियं धियं श्रिय च।

सरसा साऽलङ्कारा सगुणा [1]मृदु[1] मधुरपदसुविन्यासा।
कान्तेव कलितकविता भविता भुवि तापहारिणं सुधियाम् ॥ २५ ॥

अमितसुकृतौघबीजप्रतिभाङ्कुरशास्त्रपल्लवा वल्याः।
कवितासुधालतायाः शाम्भवविनुतिः फलं हि [2]सुसुखरसम्[2] ॥ २६ ॥

"सोमः पवते जनित" त्यादिश्रुतिततिरत्नविभृतदार्ढ्ये।
साम्बस्य सकलगुरुताविषये सुधियां धिनोति विस्रम्भम् ॥ २७ ॥

तथा च, "अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश॥ आदिवक्ता शिवः साक्षाद् एतासां परमेश्वरः।" इत्याद्युक्तकप्रामाणिकप्रणीतप्रमाणैः सकलविद्यानां शिवस्यैव प्रथमवक्तृत्वेन पुरः प्रविशरद्विद्याकमलिनी-मूलकन्दत्व प्रचुरम्। तथा च। "ईशानः सर्वविद्यानाम्" इत्यादि श्रुत्यालिप्रत्याख्यातसर्वविद्याऽऽधिपत्ये प्रत्ययरत्नदीपद्युत्या सत्यवतां विदुषां चित्रमन्दिरं नित्यं निस्तमस्कमत्यन्तं जगति प्रकाशित च। तादृङ्निखिलजगज्जन्मादिकारणेन महादेवेन "मद्भक्तास्तु मत्तोऽप्यु-त्तमाः" इत्युक्तत्वात्। पुनश्च। "व्रतानि दुश्चराणीह तपांस्युग्राणि यानि च। न्यूनानि तानि सर्वाणि शिवलिङ्गस्य धारणात्।" तथा शतरुद्रीये–"या ते शिवा तनूरघोरा पापकाशिनी। लिङ्गं शिवा तनूः प्रोक्ता मूर्निघोरा तनूः स्मृता। अपापेषु च भक्तेषु तयोर्मध्ये शिवा तनूः। काशते परमेशस्य श्रेष्ठास्ते लिङ्गधारिणः॥" इत्याद्यत्युत्तमैः

---

1 (ग)
2 सुलभं (ग)

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



प्रस्तुतग्रन्थविस्तरभयादनुपन्यस्तैरपि प्रशस्तैः सन्ताडितभेरीवद्भूरि-समीरितप्रमाणवचनैः प्रतिपादितत्वाच्च श्रीवीरशैवसदाचारसम्पन्नानां भक्तिरससुधाझरीजरीजृम्भदानन्दपरीवाहनिमज्जनपरवशकृतपरात्पर-परशिवानां शिवैकभक्तानां शिवशरणानां दुर्वादनिर्वादसर्वातिशायि समुत्कर्षत्वं सिद्धम्। तस्माद् विस्मयनीयमहितमहिमार्णवस्य शिवस्य शिवशरणानां च स्तवनमेव भुवने कवितातत्त्वविदां कोविदानां जन्म-फलमिति मन्वन्तः, शास्त्रोदन्वन्तः, कलुषं धुन्वन्तः, शिवभक्ति धिन्वन्तः, शिवव्रतमनिशं तन्वन्तः, श्रीरेणुकार्य-मरुलार्य-मयिदेव-मल्हण-मल्लण-मल्लिकार्जुन-जक्कण-केशिराज-सोम-भीम-राम-पद्म-हरिहराचार्य-राघव षडक्षरदेवप्रमुखाः, सरसशब्दचयभरितसुमुखाः, दुर्वृत्तसरणिविमुखाः, सारसारस्वतलक्ष्मीकटाक्षकवचितकलेवराः कवितानवयुवतीनव-नवताऽञ्चितसमाश्लेषसंरम्भविजृम्भत्पुलकमयकायाः, महात्मानः श्रितविघ्नगिरिशिवकवयस्तस्य शिवस्यैव तेषां शिवशरणानामेव स्तवनं माङ्गल्यलक्ष्मीभवनं कृतान्तभीलतालवनं विबुधसन्तर्पणसवनं सुकविपिकचूतभुवनं भुवनस्तव्यं भव्यं नव्यं श्राव्यं सक्रीडं चक्रुः। तान् महानुभावान् सामोदं सभक्ति सस्पृहं सकुतुकं समभिवन्द्य संकीर्त्य, तदीयचरणाऽरविन्दकरुणारसाऽभिषिक्तः शक्तोऽहं तेषामेव नवकविता-लतावितानविततविशदयशःकुसुमविसरपरिष्कृतसकलदिक्कान्ताकान्ताऽलकाऽन्तानां शान्तानां शिवकवीन्द्राणां सरणिमासाद्य, हृद्य-चरितस्य निहतदुरितस्य सुगुणभरितस्य शिवमतसुकृताऽवतरितस्य गुरु-लिङ्ग जङ्गमसेवानिरतस्य करडीश्वरस्य सत्कथाग्रथने वृजिनमथने भक्तिसुविचारमिथुने रसनां मुक्ताऽन्यकार्तनव्यसनां नित्यशिवमन्त्राऽभ्यसनां सन्नियुज्य भवामि नवाऽमितप्रमोदः।

"मद्भक्तास्तु ममाऽधिका" इति महादेवेन संकीर्तिताः
शिष्टाऽष्टाऽऽवरणाऽतिचारुविशदाऽऽचाराऽध्वसञ्चारिणः।
संशुम्भद्–गुरु–लिङ्ग–जङ्गममहासेवाऽनुभावाऽमलाऽ–
मन्दाऽऽनन्दपराः परा इति चिराद् भक्ताः समुक्ता बुधैः ॥ २८॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


शेषस्याऽपि च शेषा भाषितुमिह शंष-भूष-भवतगुणाः ।
एष करडीशकृतपरितोषो मां संयुनक्ति चटुलतया ॥ २९ ॥

भर्गांशः करडीश्वरः कृतिपतिर्माहेश्वराः पोषकाः
सद्भक्ता स्त्वभिमानिनः कृतिमिमां ख्यातिं विनेतुं स्वयम् ।
सिद्धाः शम्भुमताऽव्रतससुबुधा नैषा परीक्षावतां
पाणिस्थाऽप्यजसन्मणित्रगिव किं स्याद् राजमौलिप्रिया ॥ ३० ॥

ख्यातिं नयन्ति विबुधाः कवयः कलयन्ति केवलं काव्यम् ।
पुष्णाति वनतति घनधारा चैत्रा युनक्ति लक्ष्म्या तु ॥ ३१ ॥

इति सम्मतिश्रीर्वाचंम क्षितिसदरतिवाहिनीम् ।
कृतिमुन्नसिन्दीप्यन् मतिमत्ततिसम्मुदे ॥ ३२ ॥

अथ कथा–प्रारम्भः

ीमद्भू-महिलाऽऽनन-प्रविलसद् 'बळारि' सत्पत्तनः
श्रीभास्वत्तिलकायितः शुभगुणव्राताऽभिजातस्थितिः ।
नित्यं श्रीगुरु-लिङ्ग जङ्गम महाभक्तिच्छलाञ्चत्सुधा-
सिक्तास्वान्तवनोत्थ त्कृतिकनद्वल्ली-मतल्लां-चयः ॥ ३३ ॥

सङ्गनबसवाऽभिख्यः सङ्गासच्चरितभवतजनसख्यः ।
[1]सङ्गमितसुगुण[1]माला-सङ्गस्तामावसत् पुरीं तुङ्गः ॥ ३४ ॥

गङ्गाम्बिका नाम तस्य वनिता जनिताऽऽदरा ।
पत्यौ लिङ्गे जङ्गमे च गुरौ सुरतरो सताम् ॥ ३५ ॥

ईदृशी सुदृशां मौलिर्ददृशे न दृशेति च ।
मन्नः सन्तोषवन्तोऽमूमस्तुवन्नस्तु वच्मि किम् ॥ ३६ ॥

---

1 सगलशिवाक्ष (ख)

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


मिथुनं तद्भक्तिनयोन्मिथुनं विद्या–विवेकयोर्मिथुनम् ।
नो चेत् तादृग् घनतरशरणाऽऽविर्भवनमजनि कथम् ॥ ३७ ॥

तयोः कदाचित् पुत्राह्वाऽमुत्रेहाऽसमशर्मणे ।
अजनि स्वजनिध्वंस–हेतुरात्मातुर–स्थितिः ॥ ३८ ॥

ततोऽनपत्यताजनिततताधिसङ्गतौ वृजिनजितौ विनयभृतौ च दम्पती, विमलमती विहितधृती चिन्तयन्तौ 'पुरा खलु परात्परं दुरासदं गिरामविषयमचिरादाराध्य पुरारिं, मुरारि-पराशराऽऽत्मज-शिलाद-मादरस-मादलाम्बाप्रभृतयो महितप्रभावान् सुवैभवानात्म-भवांश्च दुर्भवारण्यदवानवाप्तमहोत्सवानवापुः किल ।' आवयोर्मनोरथ-पूरणेऽपि, केनाऽपि प्रकारेण स एव शरणं तरुणेन्दुमौलिरिति तदीय-चरणाब्जस्मरणाभरणाऽन्तःकरणावभूतामभूतपूर्वगुणसुतप्रभूतमहोत्साहौ।

तदावसत् स्थानमुदारवृत्तिस्तदा मरिस्वामिपदाऽभिधेयः ।
सदापदौघाद्रिभिदापविर्यः सदा चिदानन्दहृदात्मवेदी ॥ ३९ ॥

बरगुणमणिमाला[1]पण्डितः[1] पण्डितप्रा–
त्करनुतचरितालीभूषितः शोषिताघः ।
नटदमलयशोभाःशोभिताशोभिताढ्य–
त्पटहसुमहिमौघाऽलङ्कृतोऽलङ्कृताऽऽशः ॥ ४० ॥

शरणागतदीनजनोद्धरणासमसान्द्ररागभरणां ताम् ।
तरुणेन्दुबिम्बरुच्यनुकरणां करुणादृश हि बभ्रे यः ॥ ४१ ॥

अथ टिनकर्मसुघना पटुतरमहिमाहिमांशुसन्दीप्तः ।
राजा यतिविततेर्विरराजाखिलकालसर्गतत्त्वज्ञः ॥ ४२ ॥

भूपः कदाचिन्महिसूरपूर्या भूपावनं तं गृहमानमय्य ।
मुक्ताफलाद्यैरभिषिच्य पूर्णमुक्ताशिषेरिकथ[2]मदादनल्पम्[2] ॥ ४३ ॥

---

[1] मण्डितः (क) [2] मदात्तदास्मं (क)

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

ततो हताशाभिरतिर्यतीश्वरस्ततोदितद्रव्यतति व्यतिक्रमन् ।
गतः कृती क्षोणिपतिः प्रतीक्ष्य संगतंव्रतं तं तु सतां स्वतोऽनयत् । ४४॥

महीभुजा तेन दत्ता मही शिष्य-परम्परा ।
महीयसस्तस्य सौख्यमहीनं हितयाऽश्नुते ॥ ४५ ॥

एकरूप्य-शतप्रस्थमानभाग्यावनालके ।
काले त्रिकालतत्त्वज्ञो योगीन्द्रो विपणिं गतः ॥ ४६ ॥

एकरूप्यद्वादशाङ्कप्रस्थमानकमानयत् ।
यावनालचयं सर्वं तद् [1]दृष्ट्वा प्रचकम्पिरे[1] ॥ ४७ ॥

[2]महीशूरपुरप्रान्ते कस्मिन् गोष्टे च गोकुलाः ।
म्रियमाणाऽनन्ता गावो जीविताश्चाऽस्य भस्मना[2] ॥ ४८ ॥

किमेतेन भयं भावि भवेदिति स भीभराः ।
तथैव षट्सु मासेषु भीमक्षामोऽभवद् भुवि । ४९ ॥

यतिराडिति रागादि पद्म-पद्मी चकास यः ।
नमितानमितानन्दान् [3]कलयन्नलयं प्रथितः[3] ॥ ५० ॥

भवाभावाभावभवभिभवो भववैभवः ।
भूभावि भूभव भवो भावो भावि भभाविभः ॥ ५१ ॥

तमादतुस्तौ दयिता हि मान्द्रतमापरच्छिन्नमुदम्बुराशिम् ।
क्रमापतद्दीनजनप्रतानाक्रमापदोघापनयप्रवीणम् ॥ ५२ ।

---

[1] दृष्ट्वाऽति चकम्पिरे (क)
[2] महीसूर ....भस्मना ॥ (क)
[3] विदधें मदर्थिमयः (ख)

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



ध्यात्वा त वसुधागतं परशिवं मत्वा च तौ दम्पती
नत्वा पादतलं तदङ्घ्रिकमले कृत्वा मिलिन्दं मनः ।
धृत्वा फालतले कराम्बुजपुटं स्थित्वा पुरो याचतां
दत्वा भक्तिसुकन्यकां सुतनयं तत्त्वार्थविद्याविदम् ॥ ५३ ॥

तदा मुदा चिदानन्दनिर्धिर्वदान्ये वरः सदामोदकरः सदा परम–योगिवरः क्षणमक्षिणी निमील्य निरीक्षमाणश्चतन्मिथुनमनोरथोऽवनौ पूर्णभवनप्रयोजनार्थमिति निश्चित्य, पश्चाद् दृशा निश्चलभक्तिः 'कश्चिदपश्चिमः सतां जनिष्यती''त्यन्तःप्रमोदभरजनितेन सकलकला–सान्द्रमुखचन्द्रचन्द्रिकोपलसितसितस्मितेन तन्मिथुनाय सूचितहृदय–प्रसादो बभूव शुभावहप्रभावः ।

तावत्प्रेक्ष्य शरणागतसङ्घातावनद्ध–करुणाल्पुतचेताः ।
भावनायचरितः सुभक्तिशोभावहोऽस्त्विति सुतः समवादीत् ॥ ५४ ॥

समादाय वरं मूर्ध्ना समानामोदसम्भरौ ।
समारतुः सद्म साम्ब–समाराधन–सत्क्रियौ ॥ ५५ ॥

शिवकरमखिलानां गर्भमादत्त साध्वी
शिवसमयरमाप्त्यान्नत्य–सूनुप्रसूत्यै ।
अभवदमितहर्षो बन्धुनारीजनाना–
मभवमनसुविद्या–सुन्दरीसङ्कुलस्य ॥ ५६ ॥

तस्यास्त्वास्याब्जबिम्बद्युतिरतिववृधे द्योतनायेव भास्वद्
भाविश्रीवीरशैवोन्नतमतमुखसच्चन्द्ररुक् सान्द्रवृद्ध ।
शीर्णाः कीर्णाश्च केशाः कुचकलशमुखं नीलमीशाहितान्त–
र्वाणिश्रेणीहृदास्येद्भवितृविदळनश्यामलस्थेमलक्ष्म्याः ॥ ५७ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



शुशुभे प्रसवोन्मुखी तदा सा
भृशमारात् प्रसवोन्मुखी लतेव ।
कुशसम्प्रसरात्तमेघमाला
शशभृत्–सलसदन्तरादिगैन्द्री ॥ ५८ ॥

सारं कल्पलताफलं सुरपदिक्सूरं सुमेरोः खनिः
स्फारं रत्नमिवावलम्बित–शुभस्थाग्रहा नेहसि ।
सारंजिद्घनभक्तिमञ्जुलसुधासारं गुणाम्भोज–का–
सारं संशुषुवे चरार्चनविलासारम्भसारं सुतम् ॥ ५९ ॥

धरातलविराजितामलहराऽङ्घ्रिपूजास्पृशां
स्फुरद्वलनमस्फुरन्नयनमाशु वामेतरम् ।
कलिस्थितिबलोदितं किल पुरा न भूतं गणे–
ट्कुलस्थमचलद्भृशं खलु निबद्धमान्द्य तदा ॥ ६० ॥

[1] रेणुकाचार्य–वंशोत्थ–मुक्तामणिरतिद्युतिः ।
योगीन्द्रवृन्दतिलकः किल कल्पतरुः सताम्[1] ॥ ६१ ॥

आयातः शिशुमीक्षितुं वरमरिस्वामी कर मूर्ध्नि सं–
धायाच्छं भसितं ललाटभुवि सल्लिङ्गं सुलिङ्ग गले ।
मायापाशहरः पुरा घनदयः श्रीसङ्गमेशो वृषे--
न्द्रायाहीं तु यथा तथा समतनोद् दीक्षां [2]सुरक्षाकरीम्[2] ॥ ६२ ॥

प्रकृत्या परिशुद्धस्य प्रत्यह किल योजयन् ।
सिद्ध प्रचारयाञ्चक्रे सुशब्दं तं स सूत्रवत् ॥ ६३ ॥

---

[1] (क)

[2] सुरक्षावहां (क)

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



तदनु विधिशत् तदनुष्ठितशिवदीक्षाप्रभावेण शाणोत्कर्षणसमुन्मिषद्द्युतिर्मणिरिव पुटपाकशोधितः, सुवर्णमिव पूर्णसङ्कीर्णकान्तिः,सद्योन्य इव हृद्यो विद्योतितः, खद्योत इव वीरशैवानां यथाक्रममधीतवेदवेदान्तादिशास्त्रः, सद्गुरुपदिष्टशिवमन्त्रसंस्कारात् पुनर्जननं सिद्धमिति सर्वेषां स्फुटीकुर्वन्नखर्वप्रकाशनिधेर्योगीन्द्रस्य सकाशे संरुचिविकासः स पृथुकश्चकासयामास ।

समाप्य स समायतामलगणेट्समाराधनं
समाचरितसद्विधिः किल समास योगी ततः ।
समासददसौ शिशुर्गतसमानभावद्युतिं
समाप जनकः प्रसूर्विलसमानमोदं तदा ॥ ६४ ॥

चरणानताखिलसदाचराणादिकदानसुरगवीयोगी ।
करुणारसामृतझरोत्सरणैः सन्तर्प्य शिशुमयाच्छरणम् ॥ ६५ ॥

श्रीनन्दीशवरोदितस्य बसवाख्येष्टा हि पित्रोस्तपः-
श्रीनन्दीशमरीश्वरामलवराज्जातः सुपूतस्त्वसौ ।
सानन्दौ पितरौ च बन्धुनिचयाः स्थाने हि सास्येति ते
मानं दानमदुर्निधाय बसवाभिख्यां सुसौख्यावहाम् ॥ ६६ ॥

निरतिशयाचरितचरविसरपारणपुरःसरं परिसमापिताऽभिधानविधिः समनन्तरं समनन्तरञ्जितकान्तिकलितकलेवरसुकुमारः स कुमारः कलिमलाऽभिसरणापसारणाऽऽचरणमभिनयन्निव चरणौ परिविधूय, भाविसंभावनीयमाहेश्वरसमूहसमाह्वानद्योतनायेव करौ कलितकमलकान्तिपरिकरौ च चालयन्, दुराचारपराऽनेकनरावलीं परिहसन्निव हसन्, विशददशनरुचिरुचिरचञ्चच्चन्द्रिकाप्रसरणपरितृप्तसंविकसित जननीजनकबन्धुजनविलोचनचकोरमनःकुमुदः, संमुदितबाललीलासुरकल्लोलिनीसल्ललितकलहंसः शंसनीयगुणगणमणिमालाविलसतां सत्तामानन्द विजृम्भयन् जजृम्भे ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



नाऽरोदीन्न च वाऽपतद् भुवि वपुर्वक्रं न चक्रे न वा
चुल्लं नेत्रयुगं न पीनमुदर कासो न चाऽऽसीत् ततः ।
सामोदे सरसे सभस्मरजसि श्रीमन्दिरे सुन्दरे
वक्त्राब्जेन च के भ्रमन् सुकुतुकासङ्गाक्षभृङ्गा नृणाम् ॥ ६७ ॥

कुवलयविकसनकरभासुरनेत्रानन्ददायिनि स्फुरति ।
तद् भव्यबालचन्द्रं त्वकलङ्कत्वं स्वरूपतः सिद्धम् ॥ ६८ ॥

शिशुं तमालोक्य भृशं महाजनाः
शशङ्किरे कार्यवशादिहाऽऽगतम् ।
शशाङ्ककोटीरसुशासुनान् क्वचेद्-
रशादृशीकस्य वशार्भकस्य हि । ६९ ॥

ततोऽग्रे विरतं समाचरिष्यद् घनशिवगणसमाराधनमहोत्सवे सुरुचिरपरात्परपरशिवस्वेष्टलिङ्गपूजाऽवसरे परमनियमपरायणाश्चर-निकराः सुजनमनःकुमुदरजनीकराः पङ्क्तिश्चेत्थमेव स्थापनीय इति द्योतयितुमिव समाश्लिष्टसुखसमासनबन्धः समासीनस्ततश्च निखिल-काण्डजाण्डषण्डपुण्डरीकमण्डलमण्डिताऽखिलप्रपञ्चसरोजिनीमूलकन्द-स्याऽमन्दमदानन्दनिधेः परब्रह्मणश्चिद्धर्मः सद्धर्मपद्धतिमुद्धर्तुमना घनाऽऽमोदो भगवान् वृषेन्द्रः कृतयुगे चेत्थमेव चरणचतुष्टयेन भुवन-मवष्टभ्य स्थित इति प्रकाशयितुमिव जानुभ्यां सञ्चरन्, ततश्च लौकिकपदान्यपास्य सकलदेवतासमवाये शिव एव प्रथम इति प्रथयितु-मिव प्रथमं शिवशङ्करभवानीधवहरमृडमहादेवेति शब्दानारभ्य सुरुचिरशब्दमणिगणमण्डितकरण्डायमानमुखमण्डलः समालपन् पुरतः स्वमताऽविरुद्धपद्धतिसमाचरणाय गुरुजनचरणसन्निधिं प्रति गतागता-यतिं क्षितौ स्वतः प्रकटयितुमिव सुतरामितस्ततस्ततं सञ्चरन् पञ्च-मुखधर्मप्रपञ्चपरायणपञ्चाननः पाञ्चवार्षिकवयस्कः समभूत् समभूत-पूर्वः सुजनयनानन्दनः स नन्दनः ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


लिङ्गाऽर्चाभवनं प्रविश्य विनमंस्तज्जङ्गमाङ्घ्री समा-
लिङ्गन् बिल्वजपाक्षसूत्रभासितान्यादाय मोदान्वितः ।
साङ्गं तद्वदुपार्चनाविधिमयीं भाग्बाललीलां चका-
माङ्गश्रीपरितुष्टहृत् पितृलसन्नेत्राब्जमित्रस्त्वसौ ॥ ७० ॥

स्मरन्तो मरिदेवा विस्मरणीयकृपाभरम् ।
स्मरारिभक्ता नन्दन्ति स्म रसाद् वीक्ष्य तं शिशुम् ॥ ७१ ।

ततः स तातः सततं सतां ततौ
रतं हित शीलभृतं वितन्द्रितम् ।
सुन सुविद्योपनतं विधातुमा-
दृतं दृतं बोधयुतं ह्यमंस्त तम् ॥ ७२ ॥

अध्ययनाय कलानां विध्ययनायतिकृते सुशीलस्य ।
सुध्ययनयवृद्ध्यै स तमाध्ययनयमार्तिघं समाप गुरुम् ॥ ७३ ॥

तत्रान्तरे चित्रबलशालिनी प्राड्बिवाकस्य धेनुः कदाचिन्मदाविला सदाधारस्य चिदानन्दनिधेस्तस्य मरिस्वामियोगीन्द्रस्य सान्द्रतरां सन्म-नोनभःप्रसादनसमयशरदारम्भसौरम्भसम्भ्रमत् सरसमुखसुदृग् जनानु-मरिगनिशालिमुपानसप्रियसुजनश्रेणीराजहंसपरम्परासन्तर्पणचणां विश दयशोधवलितां महिनमहिममयां दुग्धलहरीं दोग्धुकामेव तामेव योगी-श्वरमठप्राकारान्तराऽऽवरणस्थलीं वशिष्ठधेनुवत् तदीयनियमाकुलसुरभि-विन्यस्तपदन्यासधन्यां निर्जनामविशत् तां तर्जयितुं पर्जन्यवद् गर्जया-माम ।

तदा किल प्राड्विवाकधेनोर्धेनोश्च योगिनः ।
शृङ्गाशृङ्गयभवद् युद्धमनिवार्यसमुद्धति ॥ ७४ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


निशातशृङ्गेण गवा यतीशः
कुशायिनी साऽभिहता नितान्तम् ।
दशामवापाऽऽत्तविले गलेऽन्त्या-
मशासनीयं खलु [1]भावि-कार्यम्[1] ॥ ७५ ॥

धेनोराकर्ण्य वार्तामतिकुपितमतिः प्राड्विवाकोऽविवेकाद्
धेनुः सा कस्य तां तं विकटमदभरां चाऽनयं चाऽऽनयध्वम् ।
इत्यादिष्टा हि भृत्याः पुरि पथि-पथि सञ्चेरुरुग्राऽरुणाक्षि-
क्रूराऽऽलोकं विदित्वा [2]तदनु यतिमठं तेऽगमन् वेगमग्नाः ॥ ७६ ॥

तत्रान्तरे सपदि तद्विदिताश्च भक्ताः
सम्भूय पौरजनता घनतापयुक्ताः ।
कर्तव्यमत्र किमिति भ्रमितान्तरङ्गा
जग्मुर्यतीन्द्रसविधं विविधं वदन्तः ॥ ७७ ॥

क्षणं विचिन्त्य योगी लक्षणज्ञः कालकर्मणोः ।
क्षणदो दीनौघ-संरक्षणपद्धतिजाङ्घिकः ॥ ७८ ॥

तानानीय विनयाऽऽशु ज्ञानाधानमहोक्तिभिः ।
मानयित्वा भृश भृत्यान् आनयामास तं तदा ॥ ७९ ॥

सिता बसवनामानं हिताऽहितमतिक्षमम् ।
गताऽघकर्मसङ्कल्पं श्रिताऽमरतरुं वरम् ॥ ८० ॥

तच्छर्करां बसवराजकरे सुरक्षां
दत्वा क्षिपेत्युपदिदेश तनौ तु धेनोः ।
तस्मिंस्तथा चरति सा किल गोरुदम्थात्
कर्णौ विधूय च जगर्ज कुमाचकर्ष ॥ ८१ ॥

---

1 कर्मपाकः (ख)
2 यतिनिलयसृतिं पेतुरत्यातुरेण (ख)

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


रक्षा सञ्जीविनी तद्गोरक्षाममहिमा स्वतः ।
रक्षाकरी गवां गां ररक्षातः सुप्रभावतः ॥ ८२ ॥

तदनु तदनुषक्तास्तुष्टुवुश्चेति भक्ता
घनविनयनिषिक्ताश्चित्रितस्वान्तयुक्ताः ।
असममुसड्चौडार्यो यथा [1]प्राग्[1] वृषेन्द्रं
सपदि सु[2]सुपरितुष्टयाऽजीवयद् गां यतीन्द्रः[2] ॥ ८३ ॥

तदा भृत्या मुदा जग्मुस्तदास्थानमुदायति ।
तदाधिक्यमुदारं चैतदाश्चर्यमुदाहृताः ॥ ८४ ॥

[3]जिज्ञासवे स्वभर्त्रे[3] तद् विज्ञाननिधिगौरवम् ।
[4]विज्ञापिता[4] मृता गौः संजग्ने यतिपतेरिति ॥ ८५ ॥

निशम्य वृत्तं च निरीक्ष्य धेनुं
भृशं स चित्रप्रमदोऽधिकारी ।
शशस तत्सन्निधिमेत्य पूजां
स्वशक्तिशक्यां सभयं व्यतानीत् ॥ ८६ ॥

ततश्चारु ततऽऽमोदभृतः शम्भुमताचाररता यतिपतिचरणारविन्दभक्तिरसझरीपरीतमनःसरसः सरसप्रसन्नशरदारम्भसम्भ्रममधुरकूजद्राजहंसा इव हंशकुलोत्तंसमहिमप्रशंसाप्रतिपादनरवैर्मुखरितहरिन्मुखाः सिता बसवकुमारोदारप्रभावोक्तिपराः सरागं पुरे प्रतिरथ्यं महितविभ्रमा बभ्रमुः ।

---

1 तं (क)
2 विपदिमग्नां गामजीजीवदेनाम् (ख)
3 विज्ञापयन्ति स्म भर्त्रे (ख)
4 जिज्ञासवे (ख)

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


शिता बसवनामाऽसौ क्षितावतिमहानिति
ततान श्लाघनां तत्रागताशेषजव्रजः ॥ ८७ ॥

शालाबालानम्रसंकाशालापैर्लालयन् मुहुः ।
शालामगाद् घनमरीशालानमदकुञ्जरः ॥ ८८ ॥

प्रमदनमदमर्त्यप्रेयसीफालगण्डो-
न्मसृणघुसृणरेणुश्रीपदाब्जेऽम्ब ! भूयाः ।
सदयहृदयशम्भुस्नेहपूराऽऽपगा सं-
कलितललितहंसी श्रेयसे भूयसे नः ॥ ८९ ॥

इति श्रीविनमदमरवरनिकरमौलिमणिप्रभापटलपाटलपरशिवपदार-
विन्दस्यन्ददमन्दकृपारसमरन्दझरीपरितृप्तिमदुरेन्दिन्दिरायमान-
मानससरसकविताकुतुकाकलितपर्वतसुधीविरचिते
करडीशचरितामृतचम्पूप्रबन्धे प्रथम स्तबकः ॥



॥ श्रीरस्तु, श्रीरस्तु, श्रीरस्तु ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

॥ शम्भो ! प्रसीद ॥

# द्वितीयः स्तबकः

श्रीशम्भुं शरणीकृत्य–श्रीशंसनकुतूहलम् ।
श्रीशम्बशयमुख्यस्व–श्रीशङ्काहरमर्चये ॥ १ ॥

पूर्वं सर्वोपचारैर्घनगुरुकरुणां प्राप्य [1]संप्राप्यमानां[1]
[2] विद्यां हृद्या[2]ऽनवद्यामलभदलघुधीवैभवप्राभवः सः ।
वारं वारं तुषारामलमधुरजलानेकसंसेकपुष्यद्–
वल्लीमल्लीढमञ्जुप्रसवततिमिवोत्सम्भ्रमाज्जृम्भमाणः ॥ २ ॥

तदा घनाऽऽत्मीयपदार्चनातिसं–
[3] मुदाऽभि[3]संयुक्तहृदा सहाऽऽगतम् ।
मुदा पितृभ्यां तमुदारवर्तनं
सदाश्रयः प्रेक्ष्य सदाखिलज्ञधीः ॥ ३ ॥

अनन्तरमनन्तराय सदापल्लवनवसुमनोभिमतफलाकुलातुलागम–शाखानुगतबहुलताभि[4]रामणीय[4]कमहामहिमारामसम्माह्ययुगपत्पतत्–पतत्रिसङ्घायमानसत्पक्षद्विजन्मनिजाऽङ्घ्रिकमलसेवासमादरसमागतस–द्भक्तसमूहे तदानीं चेलागतलीलामयफालाक्ष इव साक्षात् कटाक्षाभ्यां

1 संप्राप्यमानां 'क–ख' पुस्तकयोः ।
2 हृद्यां विद्यां 'ख' पुस्तके ।
3 मदाऽभिः 'क' 'ख' पुस्तकयोः ।
4 राम–रामणीयक 'क' 'ख' पुस्तकयोः ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



तमालक्ष्य बालं त्रिकालज्ञः कौतूहलादयं सल्ललितमाहेश्वरचरणपल्लव-तल्लजसेवामुल्लासेन कर्तुं भल्लूक इव तान् स्वमतं च निरुन्धन्नत्यजति नित्यकृत्यः सत्यं सत्यमित्यतः "करडि, करडि" इति कर्णाटभाषया तदीयप्रभावसमर्थनसमर्थमर्थमन्यमन्तर्निधाय, विधाय बुधायतहर्षं नाम सर्वसमाजे मनोविनोदव्याजेन व्याजहार। तदेव व्यवहारप्रचारे तन्महिम्ना स्थिरतां चाऽगमत्। आगमज्ञाः पण्डिताः सुगुणमण्डिता-स्तदेव सदा सदानन्दकरं करडीशाऽभिधानमन्वर्थतां सनयं घनयत्यभि-प्रायानुसारमनयंश्च। तथा हि। ॥ ४ ॥

कं सुखे च समाख्यातं। धातू रा दान इत्यपि ॥
कं रातीति करः प्रोक्तः। पण्डितैर्यति-मण्डितैः ॥ ५ ॥

डयते शोभते ज्ञानादिति डिः परिकीर्तितः।
करश्चाऽसौ डिश्च करडिरिति प्रतिपादितः ॥ ६ ॥

आहोस्वित् सुखदो भूत्वाऽ सुमतां च ताम्।
पुनः प्रथमसन्दोहं प्राप्तुं च शिवसन्निधिम् ॥ ७ ॥

उड्डीय च भुवो भागात्। कैलासगिरिमेष्यति ॥
तस्मात् स डयते चेति। डीरित्थं [१]हि निरूपितः[१] ॥ ८ ॥

ईष्टे तथाभूत इति। करडीश इति स्फुटम् ॥
अयं हि नित्यं सत्पक्षा। जन्मद्वयविराजितः ॥ ९ ॥

सदा सञ्चारसत्पाद-। परागसफलाऽऽदरः ॥
श्रीमन्मरिस्वामियोगी-। न्द्राऽभिप्रायाऽनुसारतः ॥ १० ॥

कर्म धारयतो धर्म-। कर्मधारण-कर्मठः ॥
मर्मज्ञैः शास्त्रतत्त्वस्य निर्मितोऽर्थोऽयमादरात् ॥ ११ ॥

---

१ स निरूपितः 'ख'-'म' पुस्तकयोः।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



अतः पक्षिस्वरूपत्वं कथितं च महात्मनः ।
करः सन् ड्यते चेति करडीरिति कीर्तितः ॥ १२ ॥

करडीशाऽभिधानं तु कर्णानां कौतुकावहम् ।
कदलीकान्तपुण्ड्रक्षुकाण्डपर्वक्षरद्रसः ॥ १३ ॥

कल्यं हि कौतुककृतौ किल कस्य वा कौ
कल्याणकर्मकलनं करडीशनाम ।
कल्यारुणोत्थकरसङ्करकाम्यसत्सा-
कल्योत्कनत्कमलवत्कलितालिपङ्क्तेः ॥ १४ ॥

श्रीमान् सोमधरः कृपाशरनिधिर्वेदादिमोदारवाक्
सारोदीरितवीरशैवसुमतप्रस्थापनास्थाभरात् ।
नन्दत्सुन्दरनन्दिनाथसुकलां संप्रीण्यतां प्राहिणो-
ल्लोके श्रीकरडीश्वरः स समुदैल्लिङ्गाऽनुषङ्गाऽङ्गभाक् ॥ १५ ॥

श्रीमन्मरिस्वामिपदाऽभिधेयः
सोमार्धभूषाऽपरभव्यकायः ।
क्षेमङ्करः प्राक्करडीश्वरे यः
प्रेमाभिरामोऽवततार गेयः ॥ १६ ॥

मोदापादनकारिभूरिमहिमाधाराघदूरक्रिया-
सारागारमरीश्वरामलपदाम्भोजातपूजोत्सवे ।
उत्का सत् करडीश्वरोऽभवदसौ श्रद्धानुबद्धः कृपा-
रङ्गत् सङ्गमनाथभक्तिविभवैः सान्द्रो वृषेन्द्रो यथा ॥ १७ ॥

क्रमतः समधिगतसकलाऽच्छकलाकलापः कलानिधिकलाभृदमलाऽ-
ङ्घ्रिकमलातिविमलाऽमन्दस्यन्दमानभवितरसझरीमरन्दतुन्दिलहृदयमि-
लिन्दः समागतवसन्तसमयसमागमसमुपचिताऽभिनवशाखोपशाखाकिस-
लयोद्गमकुसुमफलनिचयनिचुलितरुलताविसराऽभिरामाऽऽरामवद् राम-

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


णोयकनवयौवनाऽऽविर्भावसंरम्भशुम्भज्जृम्भमाणसकलाऽवयवश्चारुता – रुण्यलक्ष्मीप्रचारदत्तहस्तविनयश्रीमन्दाराऽरविन्दाऽऽकरायमानसुन्दरश-- रीरः सुरुचिरतरतरुणिमभरशरनिधिसञ्जनितमञ्जुलमणिमौवितकाय– मानमानंतररञ्जितसुगुणपुञ्जमणिमालाऽलङ्कृतः तुङ्गतरतरङ्गित – मङ्गलचरितसङ्गतघनजङ्गमवरसङ्घाऽलघुसमाराधनमहोत्सवाऽध्व– जङ्घालः सुतरामशोभि सुशोभितविशदयशोभिरभितः ॥ १८ ॥

तत्तारुण्यवने विजृम्भति हिमच्छायां च सन्मार्गिणः
सत्कीराः सुफलं सुपल्लवरसं गायत्पिका लेभिरे ।
[1] सशुम्भत्सुमनः[1] सरन्मधुरसद्भक्त्युन्मरन्दच्छटा–
मामादात्सुचरद्विरेफनिकराः केषां न तोषाय सः ॥ १९ ॥

तस्य तारुण्यराकेन्दौ चकासति कुलाकुले ।
चञ्चद्बन्धुचलच्चक्षुश्चकोरास्तृप्तिमाययुः ॥ २० ॥

पद्मं नेत्रयुगं जिगाय युगलं तद्वद्भ्रुव मन्मथ
चापं बिम्बमिदं रदच्छदयुगं पाणिद्वयं पल्लवम् ।
आश्चर्यं पुनरेक एव धरणौ श्लाघ्यः करो दक्षिणः
स्वर्गक्ष्माजमधश्चकार [2]करडीशस्याऽसमस्या[2]ऽतिदः ॥ २१ ॥

राजद्राजांशुराजम्फुरदमलयशःपुष्पसद्भक्तिजृम्भन्
मल्लीवल्लीमतल्लीसमधिगतसमारोहमाकन्दशाखी ।
शुम्भद्गम्भीरिमाम्भःशरधिरभवभव्योत्सवक्षान्तरिक्षं ।
ख्यातिप्रीतिप्रभूतिप्रभवसुभवनं भव्यतद्यौवनं स्वम् ॥ २२ ॥

अथ समकुलशीलां मातुलः शङ्करस्ता–
मदिशदसमकन्यां चारुगङ्गाऽम्बिकाऽऽख्याम् ।
सदतुलबलदेवः सद्वृषेन्द्राय पुत्रीं
स इव करडीशस्तां समङ्गीचकार ॥ २३ ॥

---

[1] सराजत्सुमन 'ख' 'ग' पुस्तकयोः ।

[2] करडीशस्याऽमलस्याऽतिदः 'ख' 'ग' पुस्तकयोः ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


सपदि सतामपरिमिताऽ[1]कपटत[1]तास्थाभरेण करडीशः ।
उपयेमे विमलगुणामुपमातिगवीरशैवविधिरीत्या ॥ १४ ॥

गङ्गाम्बा सैव गङ्गाम्बा बसवेश–समादरा ।
सभासच्चरनेत्राशापूरणाशालुठद्यशाः ॥ २५ ॥

गुरु–लिङ्ग–चराऽर्चा–संसेवारतिसुधासृतेः ।
सेकशान्तत्रितापाऽग्निमनोवनविराजिता ॥ २६ ॥

नामाजराराजमाना मारमाररमारमा ।
जमारसासारमाज रारसाररसाररा ॥ २७ ॥

अयं सर्वतो भद्र–बन्धः

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ना | मा | ज | रा | रा | ज | मा | ना |
| मा | र | मा | र | र | मा | र | मा |
| ज | मा | र | सा | सा | र | मा | ज |
| रा | र | सा | र | र | सा | र | रा |
| रा | र | सा | र | र | सा | र | रा |
| ज | मा | र | सा | सा | र | मा | ज |
| मा | र | मा | र | र | मा | र | मा |
| ना | मा | ज | रा | रा | ज | मा | ना |

---

1 चपलतता 'ख' 'ग' पुस्तकयोः ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


पतिभक्तिरमस्यन्दन्मरन्दहृदयाऽम्बुजा ।
तारुण्यदर्पमत्तेभ–निशिताऽङ्कुशसन्नया ॥ २८ ॥

सञ्चारस्तु दृशोरपाङ्गसविधो ह्रासो हि दन्तच्छदा–
वासो वाक्यततेः पतिश्रवणयोर्विश्रान्तिरेवाऽनिशम् ।
कोपः स्याद् यदि जातु तस्य विलयो [1]हृद्यो स्वचित्ते[1] त्विमे
[2] पातिव्रत्यमिदं[2] जनाय [3]जगदुस्तव्याः सुभव्या[3] गुणाः ॥ २९ ॥

गङ्गाभव्यगिरीश्वरप्रविसरत्कान्तिप्रवाहा मुखाऽ–
म्भोजोरोरुहकोकनाभिवलिकाऽऽवर्तोर्मिविभ्रजिता ।
श्रद्धाभक्तिधुनीसुसङ्गमवती तत्र त्रिवेणीझरे
क्रीडाभाक्करडीश एष शुचिताशसो हि हंसोऽभवत ॥ ३० ॥

सोऽयं तदबलोपेतः । सुबलो हि चराऽर्चने ।
[4] अनन्तकार्यदक्षोऽपि । सान्तकार्यादरोऽभवत[4] ॥ ३१ ॥

सत्कर्मपरताराजत् पुरुषस्य तु सर्वदा ।
कार्ये भार्याऽऽनुकूल्यं हि मधुमृद्वीकसङ्गतिः ॥ ३२ ॥

कान्ताऽऽनुकूल्यमवनौ धवनव्यकार्ये
निर्बीजता किल रसाललसत्फलस्य ।
हेमारविन्दसुरभिः परिभिन्नकान्ते
[5] रत्नस्रजो हि[5] परमं परिमार्दव तत ॥ ३३ ॥

---

1 हृद्यैव सर्वे 'ख'
2 पतिव्रत्यनयं 'ग' पुस्तके ।
3 जगदुस्तस्याः किलास्या 'ख' पुस्तके । जगदुस्तस्या प्रशस्या 'ग' पुस्तके।
4 अनेकतिथिरवितः स्यादेका साऽतिथिपूजना 'ख' 'ग' पुस्तकयोः ।
5 रत्नस्रजो हि 'ग' पुस्तके ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



तया विनुतयाऽव्ययाऽसमजयाऽन्वितः सङ्गतः
क्रियालसदयालयामलमयान्तरङ्गः सदा।
श्रियाऽञ्चितधिया भिया धनतयाऽन्तरायादितः
प्रियावहनया दयाच्चरचयाऽर्चनासद्विधिम् ॥ ३४ ॥

नित्यं चराऽर्चनविधौ तु धनाद्यभावे
शङ्का न काप्यजनि तत्करडीशचित्ते।
[1] काले हि किं महितमौळिगिमारयार्य[1] –
[2] प्रस्थानभक्ति[2]सुरधेनुवशीकृतेष्टाः ॥ ३५ ॥

शर्करा किल सतां करडीशः
शर्करा हि समुपाश्रितपङ्क्तेः।
शर्करा बुधचरप्रकराणां
शर्करोपपदमस्य ततः स्यात् ॥ ३६ ॥

अथ कदाचिदेवं भावे देववः कलानिधिकला-कलापः [3]किलाऽ–सम[3]विलासतस्तदा मुदा तदीयमनोरथपूरणे स्थिरतामुपपन्नोऽपि चरतां प्रपन्नः सरभसं करडीशकामसमुन्मेषणसमयं कामदहनसाधनं न तु निटिलनयन न प्रकटनीयमिति तदन्तर्धाय करालतराऽऽयुधभयङ्करैर्बहु-करैः किमिति वराऽभयकरद्वयैकपरिकरः सन्, वाङ्मनःकायैकताप्रप–न्नस्य परिसरे घनतरप्रपञ्चप्रलपनवहनकातर्यादिवशमङ्गीकृतमङ्गलैक-वदनः तत्करडीश-सत्कमः सकलसरणिसरलस्य सविधोपसर्पणे कुटिल-विभूषणप्रकटनमयुक्तमित्युत कुटिलविधौ स्वशिरःस्थिते निजभजक–निटिलतटवटितचटुलकुटिलविधिलिपिनिर्वापणमसमञ्जसमिति वा हृदि

---

[1] स्थाने हि तन्महित–मौळिगिमारमुख्याः। 'ख' 'ग' पुस्तकयोः।
[2] काले सुभक्ति 'ख'–'ग' पुस्तकयोः।
[3] किलाधिक 'ख' 'ग' पुस्तकयोः।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


विधाय, पिधाय शिरसि हिमकरकलां बहुविधायतहर्षः सकलजगदानन्दकन्दस्य नन्दिनः पूर्वरूपस्वचिद्धर्मतामुपस्थाप्य, तमन्तर्निधाय च चिच्छक्ति–क्रियाशक्तिरूपेण निगूढां भगवतीं सर्वमङ्गलां मन्दाकिनीं चाऽन्तःसन्धुक्षयन् अखण्डब्रह्माण्डखण्डपिण्डीकरणपण्डिततया निजपिचण्डकुण्डमण्डितप्रमथमण्डलः [1]सत्यसन्धस्य सविधानुसरणं द्विजिह्वाभरणताभरणतास्फुरणमकरणीयमिति शेषाद्यशेषाऽहिभूषाततिमपहाय चपलकराळतराऽऽयुधः[1] तत्करडीशसत्कर्मसमुत्करसन्निरोधसमागमिष्यदन्तरायसन्ततिसन्तर्जनार्थमिवोद्दण्डदण्डमण्डितकरः, तदवलकनातितर्षावर्षासमयसमुज्जृम्भत्कादम्बिनीप्रवर्षितहर्षरसांहृदयहृदमापूर्य परितो बहिर्निस्सरन्निव काषायाऽम्बरकवचितकलेवरः तद्विषयकहृदयप्रसादपीयूषरस एव सर्वाऽङ्गेषु प्रसारित इव सितभसितलसितफालादिसकलाऽवयवः [2]तस्य करडीशस्य सर्वार्थसिद्धिसाधनकृते सकलाऽखिलसङ्घटनाविलम्बार्थं बहिरेव सर्वाऽङ्गविधृतसिद्धघुटिकामालिकायमानरुद्राक्षमालापरिष्कृतशिरःकर्णभुजप्रकोष्टादिसर्वाङ्गः[2] समस्तसन्तापशान्तिकरस्यात्मनः सकलसन्तापकतपनविजृम्भणसमये प्रचारस्त्वचारुरिति निशीथे निशाथिनीनाथभूषः सतोषममन्दाऽऽनन्दमन्दिरस्य करडीशस्य मन्दिरं मन्दं मन्दमविन्दत ॥ ३७ ॥

स्फीतश्रीकरडीशभक्तिसुसुधां पातुं स भूतेश्वरः
पूतश्रीकरजङ्गमाऽऽकृतिभृदायातः प्रभूताऽऽदरः ।
प्रीतः सद्मनि निद्रया परवशीभूतेऽनुयातव्रजे
केतुर्दैवततेर्जगाद तरसा जाता क्षुधाऽतीव मे ॥ ३८ ॥

समागतं तं चरचन्द्रमारात्
पूर्णं कलाभिर्विशदं सदीड्यम् ।
विलोक्य रात्रौ करडीशचित्ते
मोदाऽम्बुधिः संवबृधेऽतिवेलम् ॥ ३९ ॥

---

[1] सत्यसन्धस्य... चपलकराळतराऽऽयुधः, । 'क' पुस्तके अधिकःपाठः ।
[2] तस्य करडीशस्य प्रकोष्टादिसर्वाङ्गः, 'क' पुस्तकेऽधिकः पाठः ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


इत्थं निशम्य वचनं चरराजमौलेः
[1]कर्णाऽभिषिक्त[1]सु–सुधारसपूरसारम् ।
आनन्दचित्रघनभक्तिरसाऽम्बुराशौ
चक्रे निमज्जनविधिं करडीशचित्तम् ॥ ४० ॥

स्मृत्वा शम्भुसमीरितोक्तिसरणिं मत्वा चरं शङ्करं
गत्वा तन्निकटं पुरातनपथं ध्यात्वा स तत्त्वार्थवित् ।
धृत्वा पाणितलं तमासनमुपानीत्वाऽऽत्मभाग्योदयं
ज्ञात्वा तत्पदपद्मयुग्ममलं नत्वा [2]मुदित्वाऽवसत्[2] ॥ ४१ ॥

गङ्गाम्बिका तमनुसृत्य ननाम तस्य
छायेव सङ्कुलितभक्तिरसार्द्रचित्ता ।
रेजे तदा तदलकाऽञ्चिततच्चराऽङ्घ्रि–
द्वन्द्वं यथालिकुलसङ्कुलपद्मयुग्मम् ॥ ४२ ॥

गङ्गाम्बा वीक्षमाणाऽम्बकयुगविसरन्नीलगौरारुणोद्यत्–
कान्तिश्रेणीसुवेणीविसरपरिलसत्तच्चरेन्द्राऽङ्घ्रियुग्मम् ।
कालिन्दीजह्नुकन्याम्बुजभवगृहिणीसङ्गतित्वङ्गदम्भः
पुर–स्फाराऽम्बुजातद्वयरुचिररुचेरञ्जनं सञ्जिगाय ॥ ४३ ॥

तदा चरेन्द्रस्तु जगाद कार्यैः
शान्तेषु कश्चिन्न विबोधनीयः ।
कार्या ममार्चा हि भवद्युगेनै–
वैवं न चेद्यामिवदाविलम्बम् ॥ ४४ ॥

एव देव वचो निशम्य सभयं बध्वाऽञ्जलिं भक्तित–
श्चावामेव भवत्सुभव्यचरणाम्भोजातपूजोत्सवम् ।
कुर्वंस्सर्वपते गृहाण सदयं दीनाऽल्पसेवां श्रियं
स्वामिन् क्षेमनिधे ! दरिद्रवशगां मैनाममूनां हर ॥ ४५ ॥

---

1 कर्णाऽभिषेचित 'ख' 'ग' पुस्तकयोः ।
2 मुदित्वा स्थितः 'ग' पुस्तके ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

इत्थं निपीय करडीश–वचोऽमृतं तत्–
कर्णद्वयेन सुकरं चकमे तदानीम् ।
चित्ते तथैव घनभक्तिसुधाचदन्न–
जन्य रसं रसनया चरितुं चरेन्द्रः ॥ ४६ ॥

तदा[1] मुदा करडीशः सादरमिति-मितिमति-क्रान्तं सुविनयं सुभक्तिरसं च दीनभावं पुरोधाय, पुरो निरतिशयतोषापादिभाषा–पीयूषाच्छझरेण संस्नाप्य, पुनः स्नानादिकर्मणं स्नातः स्वयमेव जला–दिकमानीय, सद्भक्तिमिव देहिनीं गेहिनीं पाक–कर्मणि नियुज्य, गङ्गाम्बिकां पुरा निम्बाम्बिकावसथ इव स्वचित्तवृत्तिं निगूढभावेन विलोकयन्तं तं त्रिलोकवरं परं चरं सुरहसा सविनयं सभक्ति सभयं सबहुमानमाहूय, समाप्लवार्थं तेन पावनपयसि प्रदत्ते सकपटचरेन्द्रः शिरोनिहितवाहिनीकस्यात्मनः सुचिरमसम्भावितजलावगाहतयाऽत्या–दरेणेव मुहुर्मुहुर्बहुल–सलिलं प्रक्षिपन् निखिलमङ्गं प्रक्षाल्य, भूयस्त–दीयमलत्रयप्रक्षालनप्रकारं प्रकटयन्निव समापितज्ञानविधिज्ञाननिधिस्तेन-सह प्रविश्य, करडीशेन लिङ्गाऽर्चना–सदनं सदलङ्कृतः स्वयं सर्वाऽऽ–त्मनां लिङ्ग-भूतोऽपि वीरशैवाऽऽचार एव सार इति प्रमारयितुं स्फारतरनिजशिखा-चक्र-कमलाऽन्तर्गत लिङ्गं कर–कमल–पीठमान–मय्य, साऽङ्गं मङ्गल–महितलिङ्गपूजाक्रम समाप्य, समादरेण विशिष्टाऽष्टावरण-निष्ठा-गरिष्ठभक्ताऽऽचारस्य पादोदकप्रसादाऽवधि-र्विधिर्विधिवद् विधातव्य इति तदीयाऽभिलाषाऽनुसारं समारचितचर–णाऽरविन्दपूजामहोत्सवप्रहृष्ट-मनाः सन्तुष्टिकृते ताभ्यां प्रतिपाद्य,सुसाधु बहिः प्रसारित हृदयप्रसादरसमिव पादोदकादिकं तदनन्तर तदनन्त-रागरचितं रुचिररसनिचुल्तिं विविध-पक्वाऽन्नं रसनायां निधाय, स्वादाऽऽमोदाऽऽपादितनेत्रनिमीलनमाचरन् करिकालचोळचोळाऽम्बा–चन्नयाऽर्यादि–निज-सन्तर्पणकलनचण भक्तगणं च स गणेन्द्रः स्मार

---

[1] मुदा 'क' पुस्तकेऽधिकः पाठः ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


स्मारं समुन्मिषद्रोमाञ्चकञ्चुकिताऽङ्गस्तदोदनादिदमेव 'मधुर-मधुर'मिति मधु-सुधादितोऽपि मधुरिमं तत्समास्वाद्य, सन्तृप्तिमासाद्य समाचरितसदेलालवङ्गहिमवालुकाजातिफलकलितललितताम्बूलप्रसेवनः सन्निधिगतेन विनययुतेन भक्तिरतेन भक्तेन साकं वीरशैवसदाचारसदर्थंसमर्थनसमर्थतुङ्गतरप्रसङ्गमङ्गलवाक्तरङ्गो वसज्जङ्गमरूपच्छन्नः कुरङ्गलिङ्गशकलसङ्गोत्तमाङ्गः ॥ ४७ ॥

ततश्च तत्राऽन्तरे,
तत्रैव निशान्ते निशान्तासन्नसमये।
प्रशान्तहृदयस्सदयमहितमहिमसङ्करः शङ्करश्चरेन्द्रः ॥ ४८ ॥

'सर्वं समाप्नुहि समाप्नुहि वाञ्छितं' चे-
त्युक्त्वारचय्य करुणारस-सेक-सिक्तम्।
आश्चर्य सिन्धुरथ तस्य समक्षमक्ष्णो-
रन्तर्दधे स भगवान् कुहना चरेशः ॥ ४९ ॥

तत्राऽद्भुत तदवलोक्य मुहूर्तमात्र
चित्रीयमाणहृदयः करडेश्वरः सः।
स त्रातया दयितया त्वचलाखिलाऽङ्ग-
चित्रार्पिताऽऽकृतिरिवास सुवासनाऽङ्कः ॥ ५० ॥

तिरोहिते तत्र चरेन्द्र-चन्द्रे
परं हि चेतःकुमुदं सुभिन्नम्।
परिस्फुरन्नेत्र-चकोररागो
सरत्तदानीं करडीश्वरस्य ॥ ५१ ॥

स्थाने तत्सदधिपतावमृतकरे निर्गते तु सन्त्यज्य।
सिद्धः कुवलयताप[1]श्चकोरपूर्वानुरागविच्छेदः[1] ॥ ५२ ॥

---

[1] कलावलिप्रसरणं गलत्यवनी 'क' पुस्तके।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


अथ शम्भुमवेत्य तं चरेन्द्रं
व्यथया प्राह सतीमतीवभिन्नः ।
ललिताङ्गि सुदुर्भगो किलाऽवाम्-
गलितोद्यन्निधिदूनदीनकल्पौ ॥ ५३ ॥

इति नितान्तं शान्तं कान्तमन्तकान्तकं स्वान्तरङ्गे विचिन्त्य, स्व-कान्तयाऽनन्तसल्लापपरे करडीशे सर्वतो निमीलयन्नीरजनीप्रभात-प्राया शनैरजनि ॥ ५४ ॥

स्वेनाऽभ्यागमनं प्रतर्क्य तरसा तस्याऽरुणस्योदयाद्
रज्यत्पूर्वदिगङ्गना निजगृहाऽलङ्कारमातन्वती ।
काश्मीराम्बुभिरानिषिञ्च्य विलसद्बन्धूकमालाचय-
च्छन्नं स्वाङ्गणमातनोदिव बभुः [1]कल्योत्थसन्ध्यारुचः[1] ॥ ५५ ॥

अरुणकिरणजाले. सा सरागा दिगैन्द्री
हृदयमपि निकाम कोक तत्प्रेयसीनाम् ।
समधिगमितपद्मा लोहिताऽपाङ्गकान्त्या
दरदलितमुखाञ्चत् पद्मकोशान्तराणि ॥ ५६ ॥

दोषाकरः स्वकरसङ्करसङ्कुचन्तीं
रात्रावलिस्वनमिषेण भृशं रुदन्तीम् ।
तां पद्मिनीं च तदिनागमनं [2]विशङ्कन्[2]
गूढोऽस्तभूभृतिभयं न कळङ्किनः क्व ॥ ५७ ॥

---

1 प्रातः प्रभूता रुचः 'क' पुस्तके ।

2 प्रतर्क्य 'क' पुस्तके ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



इन–विरहवितप्ता पद्मिनी तोयमग्ना
स्वनदतिमिलिताऽलिश्रेणिकाऽऽश्वस्यमाना ।
अरुमयमुपयातीत्यद्य तद्वीक्ष्य चिन्हं
परिहसितमुखीवोत्फुल्लपद्मा बभूव ॥ ५८ ॥

श्रुत्यन्तादिचिरन्तनोक्तिगदितश्रीवीरशैवायनो–
त्कर्षं श्रीकरडीश्वरः कलयतीत्येतत् प्रतिख्यापितुम् ।
नूत्नं रत्ननियन्त्रितं शिवगणप्रस्थापितं लोहितं
घण्टाचक्रमिवाऽर्कबिम्बमुदय–क्ष्माऽध्रे हि दध्रे स्थितिम् ॥ ५९ ॥

तदानीमम्भोजानि सारसत्वाञ्चितान्यपि बहुलविजृम्भद्रजांसि सम्भृतसद्वरेण्यसमागमसङ्कोचान्यपिस मुपगतसूर्याऽऽगमाऽऽमोदभरणि स-द्विजहंसचक्रसंवेष्टितान्यप्यविरतं मधुपरागरञ्जितानि सततं विततकुवलयमत्सराण्यपि जगच्चक्षुः–प्रियाणि निरन्तरं निरन्तरजडस्थितीन्यपि सदालिपोषणरतानि तस्य करडीशस्य विद्वद्वृन्दमन्दिराणीव सश्रीकानि, तन्मानसमिव परागस्फुरणसहानि च तदीय–सुमनश्चक्राणीव चक्राः सुघटितप्रियानुकूलसुरताः घनरसजातबद्धाऽनुरागाश्च तत्तेजोऽसहमानकुदृष्टिलोका इव घूकास्त्वदृग्विषयपुरःपथाः परिधृतसदार्यमाविर्भावविपुलखेदाश्च तच्चरितानीव सरांसि सारसाऽतिशयशोभासुराणि भुवनभरितकीर्तिबन्धुराणि च तद्गुणगणा इव सकलदिगाभोगा भास्वत्प्रभावाः परिगलिततमोभराश्च विरेजुः स राजमौलिचिन्तनपरः करडीशः परिचरितप्रातःकर्मा धर्माऽम्बुराशिः शर्माऽधिष्ठानस्य मरिस्वामियमीन्द्रस्य चरणाऽरविन्द-वन्दन–[1]समुत्सुको बभूव[1] शुभावह–स्वभावः ॥ ६० ॥

---

1 स्यन्दमानाऽमन्दाऽऽनन्दरसोऽभूत् 'क' पुस्तके ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



' कदा मरिस्वामि–सदार्य–सन्निधौ
वदेयमि''त्याशु स दान-वारिधिः ।
तदा जगामाऽऽत्मविदामधीशितु-
र्मुदा मठं भव्यमुदारवैभवम् ॥ ६१ ॥

[1]भक्तानां[2] विहिताऽऽशिषा सह बहिर्गच्छद्रदाच्छच्छवि–
ज्योत्स्नारम्यमुखेन्दुबिम्बममलं दृष्टोऽतिहृष्टो यतिम् ।
प्राणंसीच्च भजज्जनाऽञ्जलिचकद्राजीवराजीवनी ।
मध्यक्रीडितराजहंसविलसत्पादे विनोदेन सः ॥ ६२ ॥

स्मारं-स्मारं स्मरारि–स्थिरतरकरुणासारपीयूषधारा
सिक्तव्यक्ताऽच्छसूक्तान्युदितनिबिडरोमाञ्चसत्कञ्चुकाऽङ्गः ।
लीलां बालेन्दुमौलेरकथयदयमग्रे स योगीश्वरस्या-
मन्दाऽऽनन्दाऽश्रु–वृन्दोन्मधुभरनयनाऽम्भोजविभ्राजमानः ॥ ६३ ॥

आकर्ण्य कर्णरुचिरं शुचि-रञ्जितं तद्
वृत्तान्तमद्भुततरं यति-कुञ्जरः सः ।
आनन्द-सिन्धु-विनिमज्जन-केलिमाप
व्योमाऽपगा-पयसि नाकि-पतेः करीव ॥ ६४ ॥

विज्ञात-पूर्वं निज-योग-दृष्ट्या
विज्ञापितं तेन शिव-प्रसादम् ।
विज्ञाय सद्भक्त-चये स योगी
विज्ञान-सिन्धुर्निजगाद हर्षात् ॥ ६५ ॥

---

1 भक्तेभ्यः 'क' पुस्तके ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



प्राणीश–तर्पणकरः करिकाल चोल–
श्चोलाऽम्बिकाघनतरा खलु निम्ब–माता ।
कोलूरुपूर्ललितमुग्ध–सुकन्यका सा–
च्चैकोनवस्ममभवत् करडि। किलैषः ॥ ६६ ॥

तदानीं भक्तास्ते श्रवण-पुटकैस्तच्चरितसत्–
सुधापूरं पीत्वा [1]स्तवनवरणा[1]पूरितदिशः ।
बभुश्चैत्राऽऽरम्भ- ग्रसदुरु–रसालाऽङ्कुर रसो
ल्लसन्मञ्जुध्वानाऽऽकलितकलकण्ठा इव मठे ॥ ६७ ॥

नित्य स्तुत्यसुकमं सस्य-धरणिर्विद्या-लतोद्यानमा–
मोदापादकसद्गुणाऽऽलि–[2]पिकसत्पद्माऽऽलि-पद्माऽऽकरः[2] ।
साराऽसार–विचार–रत्न–विपणिः शम्भोः पदाऽम्भोरुहे
भक्तिर्मुक्ति "वधू-विलास-भवन"[3] कल्याण-कुल्याऽऽपगा ॥ ६८ ॥

क्षेम-स्तोमनिधिः पुरातन-सदाचार-प्रचाराऽयनं
शुम्भज्जृम्भित–शाम्भवोत्सव–फलालोचद्रसाल- द्रुमः ।
शात व्रात -लसद्रसैक्षव–महाकाण्डप्रकाण्ड–स्थली
रङ्गत्तुङ्ग - महत्त्वगुच्छविलसद्वल्लीमतल्ली– त तिः ॥ ६९ ॥

चित्तोन्मत्त–मतङ्गजार्दन–सृणी रागादि·रोगौषधं
कामाद्यामितखेददारिदलनोद्दामाऽतिर्भामासिका ।
पाश-क्लेश-कुपङ्क-शोषणविधौ भास्वद्विवस्वद्द्युतिः
कष्टाऽरिष्ट-दरिद्रतादिशमनी [4]पुष्टि-प्रतुष्टिप्रसूः[4] ॥ ७० ॥

---

[1] स्तवनवकवा 'ख' पुस्तके ।
[2] नलिनं व्रातामुबजाताकरः 'क' पुस्तके ।
[3] विलासिनी- जनि–गृहम् 'क' पुस्तके ।
[4] तापाग्निलोपाऽमृतम् 'क' पुस्तके ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


कान्ताऽनन्त-यशोविधूदय–सुधा-वाराशि-राराजित–
ख्याति–स्वाऽतिशय–प्रभा–पटलसन् मुक्तौघशुवित-स्फुटम् ।
श्रद्धा शुद्धिकरी गिरीश–करुणा वर्षालिवर्षाऽम्बुद–
श्रेणीक्षांश्चरेन्द्रजादरगृहं 'तापाऽग्नि-लोपाऽमृतम्'[1] ॥ ७१ ॥

नूत्नप्रत्नसुधर्मसाधकगिरां सौधः प्रबोधाऽमला–
मन्दाऽऽनन्दमरन्दसुन्दरसरोजातं निरातङ्कदा ।
घोराऽपार-विकार-कारक-विपज्जालाऽब्धिलीलार्पयत्
कुम्भीसम्भवपाणिरागम-वचो जीवो ह्यतीवोज्जलः ॥ ७२ ॥

शिवशरणवितानबद्धभास्वत्सुरसुरभिर्भुवि शाम्भवी सुभक्तिः ।
न यदि तथा श्रितकामितदोहनमाचरति सा कुतोऽद्यापि कथं
जगति ॥ ७३ ॥

भवाऽब्धिभैत्राभवभवितरेव सा
भवत्यभव्योद्भवभञ्जन-क्षमा ।
शिवेतराऽऽराधनकर्म तत् कथं
शिवेतर-ध्वंसविधौ पटु स्फुटम् ॥ ७४ ॥

इति स्तुवति भक्तौघे मितिशून्य-प्रमोद-भाक् ।
यतिर्जंगाद सुज्ञानायतिमण्डित-मानसः ॥ ७५ ॥

महेश-पूजा-विधिरेव लोके
मनीषितार्थग्रथने महीयान् ।
चिन्तामणिश्चिन्तित-दानशौण्डो
'न प्रस्तरा विस्तरिता धरण्याम्'[2] ॥ ७६ ॥

---

[1] तुष्टि–प्रतुष्टिप्रसूः 'क' पुस्तके ।

[2] न द्योतमात्रा मणयो जगत्यां 'क' पुस्तके ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



ईशे महच्छन्द-समागमोऽयं
सर्वाऽतिशायि-प्रभुतां व्यनक्ति ।
शैवास्ततस्ते भुवि धन्य-धन्या
येषां महेशः कुल-दैवतं हि ॥ ७७ ॥

महेश-भृत्यत्वत एव शैवा
महान्त एवाऽन्य-सुराऽर्चकेभ्यः ।
सामन्त-चक्राऽश्रित-मानवेभ्यो
यः सार्वभौमाऽऽदृत एव मान्यः ॥ ७८ ॥

श्रीवीरशैवस्तु ततोऽधिकोऽयं
यद्वीरशब्दोपपदत्वतश्च ।
सौराऽऽपगेत्यत्र तु सौर-शब्दो
यथा गदत्यन्य-सरिद्-गुरुत्वम् ॥ ७९ ॥
विशेषणौघस्तु विशेषमर्थं
विशेष्य-वर्गे विशिनष्टि तथ्यम् ।
कल्पादिशब्दाः किल वृक्ष-धेनु-
रत्नेषु तत्तत्त्व-निरूपका हि ॥ ८० ॥

तस्माच्छ्रीमद्वीरशैव-मतं त्वन्य-मताऽधिकम् ।
यथा सुराऽङ्गना-सङ्घे शिवा; देव-गणे शिवः ॥ ८१ ॥

किं वा कल्पतरुस्तरुः सुरमणिः किं वा मणिः स्वर्गवो
गौर्नागोऽभ्रगजो हयो मरहयः स्वर्गाऽऽपगा किं धुनी ।
किं पुष्पं सरसी-रुहं तु सरसी किं मानसं देवता
शम्भुः किं भुवि चित्क्रियाऽमल-तनुः किं वीरशैवः पुमान् ॥ ८२ ॥

तेषामत्यधिकत्वं तु गरो जागर्ति जङ्गमे ।
दीक्षादिविधि-कर्तृत्वात् पूज्यत्वादेव केवलम् ॥ ८३ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


पूजकत्वं च भक्तेषु पूज्यत्वं च गुरौ चरे ।
तदेव वक्ति तत्तार-तम्यं नैसर्गिकं भुवि ॥ ८४ ॥

बोधाद्यखिल-कर्तृत्वात् पूज्यत्वाच्च गुरौ परम् ।
चरे केवल-पूज्यत्वाज्जङ्गम-स्थलमुत्तमम् ॥ ८५ ॥

गुरौ तथा चरे सूक्ष्ममन्तरं सूक्ष्मया धिया ।
तर्क्यं षट्स्थलतत्त्वज्ञैः शिवाऽऽगम-विशारदैः ॥ ८६ ॥

निजाऽनुभाव-निपुणैर्निर्भिन्न-ज्ञान-निर्मलैः ।
नीराग-द्वेष-निरघैर्निगूढाऽर्थ-नियामकैः ॥ ८७ ॥

रसवन्मृद्वीकफले केवले तु रसे तथा ।
यावदन्तरमाभाति तावदेव गुरौ चरे ॥ ८८ ॥

एक एवाऽद्वितीयो यः शङ्करो भक्त-शङ्करः ।
गुरु-लिङ्ग-चरत्वेन लोकोद्धरण-हेतवे ॥ ८९ ॥

एक एव त्रिधा चाऽवततार करुणा-निधिः
इत्थमेव श्रुतिः प्राह "त्रिपादूर्ध्व उदैदि" ति ॥ ९० ॥

अयमर्थश्चाऽऽगमेषु घण्टा-पथ इव स्फुटम् ।
शम्भुना देव-देवेन बहुधा प्रतिपादितः ॥ ९१ ॥

एकैक-रीत्या ह्येतेषु पूज्य-पूजकता त्रिषु ।
परस्पर तु संसिद्धं गोप्याद् गोप्यतरं खलु ॥ ९२ ॥

वाचा तन्नोद्घाटनीयमूह्यमन्तर्महात्मभिः ।
आत्माऽनुभव-तत्त्वज्ञैर्गोप्याऽर्थाऽधिगम-क्षमैः ॥ ९३ ॥

वीरशैव-सदाचारायन-सञ्चार-जाङ्घिकैः ।
शिवज्ञानाऽमृतझरी सम्पूर्ण-हृदय-ह्रदैः ॥ ९४ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



सङ्गोप्यं पितृ-निक्षिप्त-धनवत् तनयेन हि ।
जातु दारा-सुतेष्वेव यथाऽन्तः कथयत्यसौ ॥ ९५ ॥

तथा निज-ज्ञान-सुधा-सिन्धु-राका-सुधाकरैः ।
निगूढं हि विचार्यं सु-ज्ञानिष्वेव परस्परम् ॥ ९६ ॥

तद्गोष्ठी-जनिताऽऽनन्दस्तेषामेव परस्परम् ।
रतिकेली-भवं सौख्यं दम्पत्योरेव तद्यथा ॥ ९७ ॥

चन्द्रबिम्बचकच्चारु-चन्द्रिकाचर्वणात् सुखम् ।
चकोराणामेव चाऽन्य-चटकादिचयस्य [1]न[1] ॥ ९८ ॥

एतच्छ्रीवीरशैवस्य समयाचारकर्तृताम् ।
[2]स्वयमेव समुद्वाह्य त्रिधा भूतो महेश्वरः[2] ॥ ९९ ॥

शम्भुः शिवः शङ्करोऽसौ समाचरति सर्वदा ।
अतः श्रीमद्वीरशैव-मतं सर्वमतोत्तमम् ॥ १०० ॥

महेशैक-स्वामिकत्वाच्चित्क्रियाचरितत्वतः ।
एतन्मतीयाः सुभगाः स्पष्टं श्रेष्ठा इति स्फुटम् ॥ १०१ ॥

प्रसक्तताऽनुप्रसक्त्याऽयमर्थः सम्प्रतिपादितः ।
अतिविस्तर-भीत्या चाऽऽचक्षे प्रकृतमादरात् ॥ १०२ ॥

एतादृग्वरवीरशैवसमयाऽऽचाराऽतिधीरावली
वर्ये श्रीकरडीश्वरे शिवकृपा जाता किलैतादृशी ।
आश्चर्यं किमुमाधवस्य विततप्रेमाऽऽम्रभूमीरुहो-
द्याने तत्सुमनः फलोदयकृतौ सिद्धा हि बद्धोत्सवः ॥ १०३ ॥

---

1 किम् 'क' पुस्तके ।

2 स्वयमेव त्रिधा भूत्वा समुद्वाह्य महेश्वरः 'क' पुस्तके ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


इति निश्चितधीरा ह्यमितसम्भृतसम्मदः ।
यतिराड्निसुज्ञानाथतिभाच्युतदुस्तमाः ॥ १०४ ॥

शिवप्रसादोऽयमुदर्कतेजो
विसारहेतुस्तव भक्तमौले ।
रसालसत्सस्यचयाऽभिवृद्ध्यै
धाराधरासारझरप्रसारः ॥ १०५ ॥

नगचापगुरूपभृद्गणेन्द्रो–
पगमो भूरि भवेदितस्ततस्त्वम् ।
सुगतादरमाचरेति सेवां
जगदेतं जगदेकदेशिकेन्द्रः ॥ १०६ ॥

हृष्टमनाः स योगीन्द्रःतुष्टिपुष्टिकृते ।
शिष्टवरं तं पुनराचष्टे. . . . . . ॥ १०७ ॥

लिङ्गाऽङ्गैक्यविचारधाम्नि विहरेः पञ्चासुचञ्चन्महा
पञ्चाऽऽचारपरः पुरातनलसद्भङ्गीं समङ्गीकुरु ।
शिष्टाऽष्टावरणप्रकृष्टनियमव्राताऽभिजाताऽधिक–
स्फीताऽऽनन्दसुधाझरीरससमास्वादातिमोदे रम-- ॥ १०८ ॥

शान्तिं विन्द; मदं त्यज; व्रज मुद; वीरालिमाराधय;
स्वार्थं त्यज्य, परार्थमाशु घटय; क्लेशान् जयाऽऽशां जहि ।
सत्पात्रे वितराऽनिशं; कुरु कृपां; दीनेषु मानेतरां
सत्कीर्तिं समुपार्जयाऽभ्युपगम श्रेयांसि भूयांस्यरम् ॥ १०९ ॥

स्थितस्य संस्थापनवच्च तस्मिन्
निसर्गसिद्धं किल साधु–वृत्तम् ।
महात्मनां सम्पदवीतिरागात्
स बोधयामास सुबोध–सिन्धुः ॥ ११० ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



इत्येतत् सकलं निरूप्य मुदिता भक्ता नियुक्ता ययु-
स्तेन श्रीकरडीश-भव्य-चरितं स्वाऽन्तः स्मरन्तः कुलम् ।
सोऽपि श्रीकरडीश्वरोऽमलमहायोगीण्णियोगं वहन्
मूर्ध्ना वेश्म जगाम शाम्भवकृपां ध्यायन् सदायप्रदाम् ॥ १११ ॥

धीमद्देवमहीरुहाभवसमाशिष्टाऽतिभव्याऽरुण
श्रीमत्कल्पलतायिताङ्गलतिकामानन्दकल्लोलिनीम् ।
सीमाऽतीतगुणावलीचितलसद्ब्रह्माण्डमालां भजे
क्षेमार्थं गिरिजां कृपारसलसच्चित्तां नमत्तापघाम् ॥ ११२ ॥

इति श्रीविनमदमर[1]वरनिकरमौलिमणिप्रभापटलपाटलपरशिवपदार-
विन्दस्यन्ददमन्दकृपारसमरन्दझरीपरितृप्तिमदुरेन्दिन्दिरायमान-
मानससरसकविताकुतुकाकलितपर्वतसुधीविरचिते
करडीशचरितामृतचम्पूप्रबन्धे द्वितीय स्तबकः ॥



॥ श्रीरस्तु, श्रीरस्तु, श्रीरस्तु ॥

---

1 वर 'ख' पुस्तकेऽधिकः पाठः ।
2 समाप्तिमगमत् इति 'क' पुस्तके नाऽस्ति ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

।। शम्भो ! प्रसीद ।।

# तृतीयः स्तबकः

श्रीगिरीन्द्र-सुताऽऽस्यंन्दु-श्रीजृम्भितमुदम्बुधिम् ।
श्राकान्तादिसुखोद्यान-श्रीमधुं शङ्करं भजे ।। १ ।।

अथ शिव-करुणात्ताज्ञानवाण्यातिसान्द्र-
प्रथितविमलतेजोराजिराजिष्णुरेषः ।
सततसतत[1]सर्वोद्योग[1]संरुद्धसम्प-
च्छरदसरदमन्दासारसाम्भस्सरोवत् ।। २ ।।

ललितशिवगणार्चाहर्थिसंसार्थहेतोः
कलितमतनुतासौयसयंमूह्यमंसः ।
फलितबहुलला भोभूःमृडाऽनुग्रहेण
स्खलितरसमुशक्तेर्हेमतामेति लोहः ।। ३ ।।

धनमदलवरिक्तो दान्तिशान्तिप्रयुक्तो
घनविनयनिषक्तो भक्तिकान्ताऽनुरक्तः ।
कनदमलसुसूक्तो धर्मपीयूषसिक्तो
जनहितकृतिसक्तो जङ्गमार्चाऽतिशक्तः ।। ४ ।।

---

[1] कृत्योद्योग 'क' पुस्तके ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


श्रीमत्[1]सोमदयोदयाचलतटीभागात्[1] सुरागौ यश-
स्तेजोराजदिवाकरौ तु [2]करडीशस्या[2]निभस्यैकदा ।
जातौ वीतकुदुर्ग्रहौ क्षितिनभश्चारुप्रचाराऽङ्कितौ
प्रेमस्थेमभरौ विरेजतुरहोरात्रं हि चित्रं भुवि ॥ ५ ॥

कुवलयहितकारी तस्य सत्कीर्तिचन्द्र-
श्शरज[3]गुरुनितान्तामोद[3]सम्पादकोऽभूत ।
अमृतशुचिसुभासासौ [4]चकोरार्तिहारी[4]
भुवनजचरचक्रानन्दकारीति चित्रम् ॥ ६ ॥

स्वाराजद्विबुधालये प्रतिदिनं दत्तं यथेच्छं धरा
राराजद्विबुधोत्कराय न किमप्यद्याऽपि किञ्चित् किल ।
इत्यालोच्य तदिष्टपूरणकृते सम्भूय देवद्रुमाः
पञ्चाऽऽपुः करडीश-भव्यकरतां त्यागे सुरागस्स तत् ॥ ७ ॥

नित्यं विकासि करडीशकराब्जदाना
धारामरन्दरतधीर[5]कराद्विरेफा[6] ।
उन्मत्त-पद्मिपटुकारकठोरशब्द-
व्याघातदानमिह न स्म परिस्मरन्ति ॥ ८ ॥

---

1 सोमदयोदयोदयकुमृद्भागात् 'क' पुस्तके ।

2 महतस्तस्या 'क' पुस्तके ।

3 गुरुदुरंतामोद 'क' पुस्तके ।

4 चकोरादराढ्यो 'क' पुस्तके ।

5 चर द्विरेफाः 'क' पुस्तके ।

6 धारामधुप्रियचरालिकरद्विरेफाः । इति द्वितीयोऽपि पाठः 'ख' पुस्तके ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

यासि क्वाऽऽशु कुरङ्ग हंस मलये गायन्ति सिद्धाङ्गनाः
श्रोतुं तां करडीशकीर्तिमुडुराट् क्वाऽस्तीश-मौलौ सुखी ।
सुप्तः कार्यकरोऽस्य कः किल यशश्चन्द्रो हि तस्य क्व ते
यानं [1]धातृगिरास्य दान[1]जलसत्पूरे विहारेच्छया ॥ ९ ॥

किं मैनाक ! विषीदसे सुरपतेर्भीत्याऽम्बुधिः सद्म ते
स्यात् किं श्रीकरडीश्वरस्य महता शुष्कः प्रतापार्चिषा ।
तद्दानाऽम्बुझरैरपूरि च ततो जागर्ति लोकत्रये
तस्याऽऽख्या किल दानवारि[2]पदमित्याश्वासितो[2] मेरुणा ॥ १० ॥

विरञ्चिदयिताशयाञ्चितविपञ्चिकासञ्चर–
त्तदंहतिगुणस्तवाऽक्षर-सुधां निपीयाऽमराः ।
अजाऽच्युतशिवाऽभिधा ह[3]किंतिचना[3] भवन् निर्जरा
विशिष्य मधुरादरोगजमुखस्तु लम्बोदरः ॥ ११ ॥

चञ्चत्काञ्चनमञ्चसञ्चयरमन्नाथोरुक्रीडत्प्रियोरस्थली
मृष्टाऽमृष्टकुचप्रलिप्तमकरीपत्राङ्कुरप्रावलीः ।
तद्विद्वन्महिला सुसौधसदने संक्षाल्य गङ्गाजले
स्वस्त्रीणां करडीशदानचरितं वक्ष्यन्ति सुक्षेमतः ॥ १२ ॥

तद्विद्वत्सौधदेशाटनघनवनितावक्तृमिन्दुं विजानन्
राहुर्यातो गृहीतुं सुपटितकरडीशाच्छदानप्रशसाम् ।
श्रृण्वन्नेन्दुर्बुधस्त्रीवदनमिति [4]तदुन्मुच्य धावत्यजस्रं[4]
सौधं सौधं ग्रसेप्तं नयदि विधुमयं नित्यमेवात्यमर्षी ॥ १३ ॥

---

1 तस्य सदा प्रदान 'क' पुस्तके ।

2 पदमित्युक्तो भिया 'क' पुस्तके ।

3 कतिचना 'क' पुस्तके ।

4 विमुञ्चन् सदा धावतीत्थं । इत्यपि द्वितीयो पाठः 'ख' पुस्तके ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



अयं करडिभृशं दिशति हेम-रौप्यस्फुर-
द्विभूषणचयं सदाश्रितचरावलेश्चेत् स किम् ।
जहाति मम मन्दिरे कनकतारशैलाविति
स्वभक्तजनकातरः पितृवनाऽऽलयः शङ्करः ॥ १४ ॥

मुक्तारत्नमयस्रजस्तव गले नो सन्ति किं भारती
प्रायस्तास्तुम देव वाञ्छति मम स्वान्तं कुतः प्रेयसी ।
दानं तत्करडीशकल्पितजलासेकादभूदम्बुधि-
र्निस्तोयः किल रत्नमौक्तिकफलानीका वराकायताः ॥ १५ ॥

गुञ्जापुञ्जमयीं [1]किमद्य कमले ! मालां बिभर्षि प्रियं ![1]
वाग्गातोत्करडीशकीर्तनरतपश्यन्न दत्ता धृता ।
किं कोशंशभियादृतं स तु गतः कोशं विशोध्याखिला
रक्तादेव कुतः स वीक्ष्य जगदेतत्तेजसे दृग्जगत् ॥ १६ ॥

भद्रे वाणि ! मदङ्कपीठमयि ! निःशङ्कं किमारोहसे ?
किं स्वामिन्नहमद्रिराजतनया शुभ्रं किमङ्गं तव ? ।
माला दैत्यशिरस्ततेस्तव गलः शम्भो तथैवाऽस्ति किं ?
मन्ये तत्करडीशकीर्तिमहसा[2]तेनैव जानीहि माम्[2] ॥ १७ ॥

श्रेयोद्यत्सदनाऽन्तरालसरसां राजत्सरोजोत्पल-
श्रेणीं चक्रचकोरवृन्दमनिशं सूर्येन्दुकांक्षां विना ।
फुल्लां श्रीकरडीशनित्यविलसत्तेजोर्ककीर्तीन्दुसद्-
भासा तृप्तमुदीक्ष्य धीरवनिता नन्दत्यमन्दं प्रियैः ॥ १८ ॥

---

[1] स्रजं धरसि किं पद्मे न मुक्ता गृहे । 'क' पुस्तके ।

[2] तेनेति जाने च माम् 'क' पुस्तके ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



पीत्वा श्रीकरडीश[1]सारसुयशः[1]शंसासुधां किन्नरा-
स्योत्थां वीक्षितुमाययौ सपदि तां वाणी सरोजालया ।
वक्त्रे सत्यगृहे दृगम्बुजयुगे तस्थौ रताद्यान्तिमा
तत्तद्शोधितवीक्षितेषु लगतस्सद्यस्सुविद्या-श्रियौ ॥ १९ ।

नित्यं सत्पथगं घनं हि करडीशाख्यं कृपापाङ्गभा
विद्युद्दानवच सुगर्जितभरं कालानपेक्षं सदा ।
रौप्य-स्वर्णमुखेष्ट-वर्षिणमयं स्मृत्वाऽम्बुदायी घनः
काले नीलमुखो ददाति न ददात्येवं ह्रियं वै कदा ॥ २० ॥

एवं सम्भावनीयः सारगुणवारविस्फारमणिमारघननीरधिः करडीशः पुनर्भास्वानिव भुवनजननवबन्धुः, चन्द्र इव सरसकलावती-विलासप्रसरणप्रमुदितकुवलयः, कुज इव नित्यमङ्गलाऽभिख्यः, सौम्य इव विमलकलानिधिकामिततनयः; सुराचार्य इव सुमतिभासुरसमूह-समुत्सवकरशिवपरसुमन्त्रपरायणः; पूर्वदेवदेशिक इवाऽपरिमितासुरा--जित्राणनसाधनप्रयत्नपरम्परापरीतः; छायापुत्र इव सारसरसश्री-सम्पादनभाविभावसुकुमारः; पुनः सागर इव सदाऽच्युतश्रीसमुपेतः, सन्मार्गचरघनजीवनीयप्रदानधुरीणश्च; सुत्रामेव सुपर्वसुकरसुखश्रेणी-संवर्धकसुधर्माऽलङ्कृतः, सुकुमारशिवपदसुरागप्रसवसद्भावाऽभ्युदित-प्रमोदश्च; विरिञ्चिरिव विपुलसत्यालयास्थानवरताऽभ्युदञ्चितसौख्यो विमलवाणीसदनवदनश्च; दामोदर इव दानवारात्यक्षरसमुदञ्चितप्रमोद-भरितविबुधसन्दोहो, दाक्षायणीवल्लभपदैकनिहितदृष्टिसमर्चनोपलब्ध-परिपूर्णमनोरथश्च; पुनर्जगत्तमत्[2]समुत्सारकतेजः[2] प्रभाकरोऽपि सुमनःसङ्घसन्तृप्तिकरकला[3]कलापः[3]; कुवलयाऽऽनन्दकराऽपि कलि-

---

1 मव्यसुयशः 'क' पुस्तके ।

2 समुत्सारणचणः 'क' पुस्तके (सारण-चरण,)

3 कलानिधिः 'क' पुस्तके ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



तोदारकमलाऽऽमोदस्फुटतरमङ्गलाऽभिधानोऽप्यस्थिरात्मभवः; पुत्र-भावमन्तर्पितसोमोऽपि तथैव सदार्यमानन्दकरः; कुशलतरझषणोऽपि विपुलविबुधाहितविनोदविधिविलीनमनाः; महितदानवोत्करगुरुरपि महादेवगणसन्तर्पणसमादरः; प्रचुरतेजोराजिराजिष्णुमित्रमहाच्छाया-नन्दकरोऽप्यमन्दः; पुनः पुरस्कृतपञ्चाननोऽपि सदने कपालीपालन-पटीयान्; विपुलसुखसदनवैभवोऽपि महितलसद्विचित्रश्रीप्रचारः; तिरस्कृतोद्यमोऽपि समधिगतबहुलाभः; सततापार्थलोभोऽपि निकामं भीमगुणगणः, श्रवणचिन्तनकीर्तनप्रमुखाऽतिप्रसक्तमनःप्रवृत्तिः; चरैक-सेवाधुरन्धरोऽपि स्थिराऽतिभक्तिपरायणः परं रराज विराजितधरागत-सुरागः ॥ २१ ॥

[1]यदीयघन[1]सङ्गमाऽभ्युदितपुण्ययोगाद्बुधै-
र्मदालिकुलसङ्कुलप्रसवमाल्यवन्धाऽञ्चिते ।
स्रवदिन्दुमणिसलसत्मदनसौधजालाऽन्तरे
सरेन्द्रविधिविष्णुसंसदमरोक्तिराकर्ण्यते ॥ २२ ॥

आसीद् यद्गुणबीजदानजलसंसेकोन्मिषत्कीर्तिसद्-
वल्लीसञ्चयकायमानपटली चञ्चत्प्रपञ्चावलं ।
भक्तिश्रीसुविलासमन्दिरमनोऽम्भोजोभवस्व-स्थिरा-
मोदः श्रीकरडीश्वरः सुविबुधो नो दानवो मानवः ॥ २३ ॥

अगजेन्द्राऽनुकूलस्सद्विपावनमनाः सदा ।
सूर्यागमधृतामोदोऽप्यजडाश्रयसस्थितिः ॥ २४ ॥

सौभाग्यं सौलभ्यं सौजन्यं सौमनः ससौहार्दं ।
सौकर्यं सौशील्यं साकं सर्वाण्ययुस्सु करडीशम् ॥ २५ ॥

---

1 तदीयघन 'क' पुस्तके ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


प्रदानगुणसम्पत्तिरदाने च दरिद्रता ।
वैधर्म्यमपि तत्तस्मिन् साधर्म्यमगमत् किल ॥ २६ ॥

एकः स्वयमलंभूष्णुः पूर्त्यै सद्वाञ्छितावलेः ।
इन्दोरनितरापेक्षं कैरवोल्लसने यथा ॥ २७ ॥

एवं पावनजगज्जीवनश्रीनिलयस्य सुगुणमणिसागरस्य करडीश्वरस्य भार्या विमलचर्या नियमिवर्या हितसुकार्याऽनुकूला सर्वदा सर्वतोमुखमनोज्ञा, सालकालिमुखालिव्यालीढनालिका, विमलदृक्चपलशफरविवर्ता, कुन्दसुन्दरमन्दस्मितफेनवृन्दा, विलसितगलशङ्खसङ्कुलिता, घनस्तनचक्रबन्धुरा, कोमलश्यामलरोमराजिशैवला, सुललितवलित्रयतरङ्गा, शुम्भद्गम्भीरनाभीवलयावर्ता, धराडम्बरविडम्बनितम्बसैकता, हंसगतिप्रशंसा, मङ्गलमयरङ्गद्भक्तिसुधातरङ्गिणी सङ्गमाभिनवा गङ्गाऽम्बिका नाम सदापन्नसत्त्वाऽपि कदाचिदापन्नसत्त्वा सदाशिवप्रसादात् कतिपय-दिनेषु गतेषु जठरगतस्य गुरूक्तमतस्य लिङ्गव्रतस्य चराऽऽलि-रतस्य सुगुणयुतस्य सुभगसुतस्य गुणान्वितः सुतरां स्वान्तराक्रान्ता इव दौहृदोचितः प्रथममभिलाषः परं गुरु-लिङ्ग-जङ्गमसेवा-समर्चन-तत्पादोदकादिनिषेवण-शिवध्यान-शिवकथाश्रवणकीर्तनादौ मञ्जुलः पुञ्जीभूय सञ्जातस्तदनु तदनु घनपटीयः करडीश-पूरितमनोरथा वसन्तसमयसमागम-पल्लवितकुसुमितफलितललितमाकन्दशाखावलीव पुष्यत्सकलाऽवयवा सदालिसङ्गमदायतिप्रदायिनी, तदा तु शारदेन्दुसम्पदागमा-स्वधा हि सा तदाननश्रीदुर्भवहरगर्भविलसदर्भकसदमलचिदानन्दसुधाझरीपरीवाहः परं बहिरुत्सरन् मुखवलयमावृत्य विकासित इव चकासे निष्पन्देन्दिन्दिरमन्दिरसुन्दरशिरोदेशसरोजकं शश्वद् विराजदुरोजयुगं मेचकचूचकं तरुणहिमकिरणभरणचरणस्मरणाऽन्तःकरणशरणतरुणाऽरुणकिरणोदयादाविर्भविष्यत् परात्परशिवद्रोहदुराचारदुराग्रहपरायणनरावलीमुखकुमुदकुट्मलमावेदयतीव श्रीमद्रोमराजिः कोमला चरणस्तोमश्रीश्च श्यामलाललितवलित्रयं मलत्रय च;

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


प्रशस्तमपि त्रस्तमिव ध्वस्तं विलसदगाधं नाभीमण्डलं जृम्भद्दम्भ-विहरत्कुजनमनःकुहरं च गतगाम्भीर्यं भृशमनिशं कृशमप्यवलग्नं सुदृशामसदृशमनोरथपूगं च विततभोगं; गन्धसिन्धुरमन्दरसुन्दरगतिरिन्दुधरानन्दकजननिन्दककटुवृन्दकपटगतिरतीवमन्दा चैवं दौहृद-लक्षणं बहुसुलक्षण वान्दवेक्षणकुवलयविभावरीशः प्रभावत्सुभावप्रभाव शुभावहं बभूव ॥ २८ ॥

मदनारिभजकप्रथुके सदन्ते गर्भस्य ललति ललनायाः ।
मदनास्त्रकोशयुगली वदनं नीलं गुणो विशीर्णश्च ॥ २९ ॥

यदा सुधांशुश्शुभमालिभासुरस्तदाननं चक्रयुगस्य मेचकम् ।
इदं तु युक्तं तदुपान्त्यकस्थलास्पदं तमः पल्लवितं तदद्भुतम् ॥ ३० ॥

कूमारूरभृदभ्रगः किल घनागाधोऽपि गाधोऽञ्चितम्
सोपानत्रयमापलोपमजले नीलं स्फुरं शैवलम् ।
पुष्टे पङ्कजकुड्मले मुखभुवि श्यामे सुधांशुः कनत्
काञ्चिद्भान्ति चयो द्विधा प्रसरितं चित्रं तदत्र स्फुटम् ॥ ३१ ॥

सूनुः सञ्जनितः शिवामलपदध्यानैकनिष्ठः परं
नित्यं पावनचित्सुधारससमास्वादानुमोदाकुलः ।
मत्क्षीरं त्वगुपागतं पिबति वा नो वेत्युरोजद्वयं
वक्त्रे नीलिम किं दधाविव तदा तच्चूचुकं मेचकम् ॥ ३२ ॥

करडीशविलोकनेन शय्या करभाजः परमुत्थितुं यतन्त्या ।
करणीयविधौ तदान्तरायः करसंज्ञेव बभूव तस्य साध्व्याः ॥ ३३ ॥

दोहृदश्रीर्वसन्तश्रीः श्रितालयामोददायिनी ।
सद्धितत्यानन्दकरी सेवा सा प्रसवोन्मुखी ॥ ३४ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

तदानीं गङ्गाम्बा परिणतसुगर्भोभयतटो-
द्गमत्पूर्णश्रोतुं ललदलसगङ्गेव शुशुभ ।
सुडिम्भाच्चिद्गर्भश्रियमति कनन्मौक्तिकफलो
लसन्मुक्तास्फोट. क्वचन च शशाकाऽनुकरितुम् ॥ ३५ ॥

अङ्गीचकार गङ्गाम्बा मङ्गलाहूतरङ्गिता ।
गाङ्गेयाङ्गश्रितगर्भा गङ्गाख्यामर्थतस्तदा ॥ ३६ ॥

साध्वी समीपप्रसवा सा गङ्गाम्बा समावहत् ।
सम्भविष्यत्सोमसम्राट्सुधासिन्धूर्मिसम्पदम् ॥ ३७ ॥

सुदिने सुतिथौ च सुभे सुयोग-करणे स सुग्रह-सुलग्ने ।
शुशुवे सूनुं सुतनुःसुखचयमिव सुगुरुसूचितसुपद्या ॥ ३८ ॥

प्राञ्चत्सत्कवितालतेव सुयशः पुष्पं हि सद्वासना-
पूगावासितदिक्चयं घनसदाचारं च सद्भक्तिवत् ।
पुण्य सर्वसुखोदय वितरणश्रीवत्सदापावनं
गङ्गाम्बा तनयं त्वसूत विनयं विद्याऽनवद्या यथा ॥ ३९ ॥

पूर्वं श्रीबसवेश्वराऽमलवधू गङ्गाम्बिकागर्भत-
स्तेज वारिधिवीरसङ्गविभुर्जातोऽतिपूतो यथा ।
सोऽयं करडीश्वरस्य बसवाऽभिख्यस्य भागवत्सती
गङ्गाम्बा घनगर्भरूपरोहणमणिः पूतः प्रभूतस्तथा ॥ ४० ॥

श्रीवीरशैवमतगाननपद्मरागा
श्रीवीरणाञ्चदरुणे तरुणेऽभिजाते ।
देवी रसागतभरा हि मुदा तदा ते
स्रावीरसो भवद्दारसदावलीनाम् ॥ ४१ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


गङ्गाम्बां तं श्यावकं च मङ्गलस्नानमङ्गनाः
साङ्गं तत् कारयामासुरङ्गद्भक्तितरङ्गिताः ॥ ४२ ॥

ततः;

पञ्चाऽऽस्य–भक्त–सन्दोह–पञ्चाऽऽस्यः करडीश्वरः ।
पञ्चमाऽन्वय–नाकेन्दुः पञ्चाऽऽचार–परायणः ॥ ४३ ॥

पञ्चाऽऽचार्य–प्रोक्तसप्रपञ्चाऽऽचार–नियामकम् ।
पञ्च–क्लेश–घ्नमाहूय पञ्च–मुद्रा–धरं गुरुम् ॥ ४४ ॥

पञ्च–सूत्राऽञ्चितं लिङ्गं पञ्च–तत्त्वादि- गर्भितम् ।
पञ्चवक्त्राऽङ्कमानीत्वा पञ्च–लक्षण–लक्षितम् ॥ ४५ ॥

लिङ्गाऽङ्ग–सामरस्याऽऽभ- लिङ्गिनं कर्तुमात्मजम् ।
लिङ्गेतराननुसरल्लिङ्ग- प्राणिवृतो यतत् ॥ ४६ ॥

सपत्नीकः पूतपाणिराचम्याऽऽयम्य च त्वसून् ।
देश-कालौ च संकीर्त्य तस्मिन्नेव दिने शुभे ॥ ४७ ॥

मद्धर्मपत्न्यां जातस्य सुतस्याऽखिलसिद्धये ।
पावनत्वाऽऽपादनार्थं शिवाचार–प्रपूर्तये ॥ ४८ ॥

ईशानतोऽस्येति लसच्चतुर्वेदशिखोक्तितः ।
शम्भोरीशान–वक्त्रोत्थ–गणैरारभ्य चऽऽगतम् ॥ ४९ ॥

बहुधा वेदोपनिषद्व्याख्यातं चऽऽगमोदितम् ।
शिष्टैरनुष्ठितं स्पष्टं तुष्टि–पुष्टि–प्रदायकम् ॥ ५० ॥

श्रीवीरशैव–समयाऽऽ–चार–प्राथमिकं परम् ।
लिङ्गधारणरूपं तज्जातकर्म सनातनम् ॥ ५१ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


कारयिष्ये मङ्गलश्री–करणं शरणावलेः ।
इति संकल्प्य पुरतः स्फुरितं दुरितच्छिदम् ॥ ५२ ॥

आचार्यं प्रार्थयामास तत्कृते सत्कृतेप्सितः ।
महेश्वरसमानीक–सहितो महितोत्सवः ॥ ५३ ॥

पुनः पुनरित्थमर्थितः परमनन्तरमनन्तरायमनन्तरचितपरिकर–णाल्यावरणः परिचरणादरशरणाल्योद्धरणाकुलकरुणारसभरणाऽन्तः–करणः किल धरणीतलाऽवतरत्तरुणेन्दुभरणः परतरो गुरुवरो विधु–धरोक्तमार्गेण समधीतनिगम–निगमान्ताऽऽगमनिधिर्विधिवत्प्रतिष्ठाप्य कलशं, तत्र किल शङ्करं महिमकुलसङ्करमावाह्य, यथाविधि समभ्यर्च्य, कलशोपरि हस्तं निधाय, अष्टोत्तर(शत) मूलमन्त्रं जप्त्वा, पञ्च–सूत्राऽऽयतं लिङ्गमादाय, समभिमन्त्र्य, प्रसृमरतमस्समूहसमुत्सारक–चञ्चच्चन्द्रिकाप्रसरणमिव शिशोः सर्वाऽङ्गे मायातमोदूरसमुच्चाटन–सारतरं भस्मोद्धूलनमारचय्य, बालशशि–विडम्बिनीबालकस्य फाल–मूले कालकामत्रिपुरदहनलीलात्रयस्मारकं तापत्रय-तनुत्रय-जीवत्रय–दशात्रय–मलत्रयेषणत्रयादि–दोषपेषण–चणसत्कर्मपोषणवत्तया सपरि–तोषणशशिभूषणप्रदत्तवीरशैवसमयसर्वोत्तमत्वकथकबिरुदाङ्करेखावलि -त्रयमिव भसितत्रिपुण्ड्रं विन्यस्य, धन्यस्य तस्याऽर्भकस्य प्राणकला–मादाय तस्मिल्लिङ्गे सन्नियुज्य, पट्टवस्त्रेणाऽऽबध्य, शिवलिङ्गं कण्ठे बध्नन्, दुर्भय-मृषो मनीषितपुषो महाशिषो वाचयित्वा, सुलक्षण–लक्षितस्य शिशोर्दक्षिणकर्णे यथाविधि मन्त्रमुपदिश्य, ततो लिङ्गाऽङ्ग-सङ्गिनस्तस्य मङ्गलमयजङ्गमतासङ्गतरसुङ्गस्तरस्य गुरुवरस्वपा–दोदकादिकमदात् । तदा मुदा सदा सदानन्दकरः करडीशः शिव–ङ्करमगणितशिवगणसमाराधनं सभक्ति सामोदं सलीलं सकुतूहलं निजमनस्समुन्नतिसदृशमसदृशं मनीषिमुखजनाऽखिलमनीषितमनोज्ञ–धनाऽधिकविततिवितरणं चकार, गतविकारः स कारण-पुरुषः ॥ ५४ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

LIBRARY
Jangamawadi Math, Varanasi
Acc. No. 3976
Digitized By Siddhanta eGangotri Gyaan Kosha


मरिस्वामि-मुखाश्चाऽऽर्याः परिस्फुरित-बालकम् ।
निरीक्ष्याऽयं भवेदेव गरीयानिति मेनिरे ॥ ५५ ॥

संस्कारपावनसुधारससेकपान-
प्रोन्मीलितं दितिचयं किल बालकाऽऽस्यम् ।
सच्चन्द्रकान्तमणिदर्पणवच्चकासे
सस्फाटिकीव न हि न वा प्रतिमास जीव ॥ ५६ ॥

हृद्योवद्योतिष्टदीक्षाप्रभावात्
खद्योतद्योतातिदीप्ताऽर्भकेन ।
सद्योमुद्योगेन चाप्तास्यपद्मे
नाद्योभेद्यो मञ्जुलश्रीप्रचारः ॥ ५७ ॥

तदनु, सुदिने सदने हृसिसदनैकहितकरः करडीसुतस्य तस्य नामकरणकर्म कर्तुमारभमाणः क्षारबन्धुवारनिलदगारतलसुपूरित-घनमाराारिभजकनारीजनप्रारीप्सितमङ्गलकर्मसाधनार्थसामग्रीसम्मेलन-सादरस्वात्मनस्तुङ्गतरजङ्गमभक्त्यङ्गनाऽऽलिङ्गनाऽतिसुखपरवशतया पुरतः परतरभक्तिज्ञाननिरतिभरितान् गलितदुरितान् ललितचरितान् परमशिवाऽनुभवसारसमूहानुरुतरचरसमूहान् सभक्ति समाहूय, बहि-रङ्गपावनार्थं दन्तधावनस्नानादिकं विरचय्य, सुरुचितमङ्गलमय-लिङ्गपूजनार्थं पङ्क्तिशः समाकलितसमासनानि समयाऽसमयाऽनुकूल-नार्थमुपन्यस्त, द्विस्सङ्घटितधौतवस्त्रपरिशोधितनिर्मलजलभस्मगन्धाऽ-क्षतबिल्वशमीतुलसीदूर्वादर्भा, अर्कपुन्नागकरवीराऽर्जुनाऽम्बुरुहबकुलाऽऽ-म्रपाटलीदाडिमाऽशोकचम्पकभृङ्गाऽपामार्गमाचीमरवककान्तद्रोणमल्लि-कामालतीकदम्बमुखपवित्रपत्रकुसुमविसर-धूपदीपादिपापतापादिलोपकर-कणोपकरणसामग्री समुदयः समुदयपरान् किल तान् लिङ्गपूजा-लिङ्गस्तव--लिङ्गजप--लिङ्गध्यान-लिङ्गमनोलयादिजनितपरमानन्द-स्वधारससन्तृप्तानपि पुनर्निजमधुरिमाधरितसुधारसबहुविधातिरुचिर-

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


भक्ष्यभोज्यरसायनान् शाखादिभिस्तोकाऽन्यं भक्तिसविनयं समाहूत-समयसमागमिताऽमितभक्तमाहेश्वरसमूहांश्च सुतरां सन्तर्पयित्वा, समनन्तरं मङ्गलतूर्यघोषपूर्यमाणसदानभोग: कर्णाट-भाषया घनाभवमनो-हर-सनातनशरणजनातिसुखप्रसवबसवराजकल्पताप्रतिपादकमथवा गुरोर्बसवाऽभिख्यस्य करडीशस्य तनुजन्मनश्चैतदेव समुचितमिति वा सदक्षरजन्यमर्थमन्यं मान्यं मनसि विन्यस्य परतरज्ञानपरायणमरिस्वामि-मुखार्यजनमुखोच्चरितं मरिबसव:ऽभिधानं निधाय, सुधायतं बहुविधायतसुखं श्रवणानां तदा स महानुभाव: परमनूनं निखिलजनानन्दवरं दानं नानाविधं मानेतरं ततान, कृताऽनेकविबुधवितानमनोरथप्रतान: तदेव नाम पण्डिताख्खण्डिताघा: सार्थकयाञ्चक्रु: सक्रींड च ॥ ५८ ॥

तथाहि–

म: परं बन्धने प्रोक्तो रि: क्षये तु समीरित: ।
मस्सरिर्यस्मात् स मरिरिति शक्त्या नियोजित: ॥ ५९ ॥

बहुव्रीहिसमासेन ग्रथित: । कथित: स्फुटम् ।
बन्ध-नाशकरूपोऽर्थो । मरिशब्द-निरूपित: ॥ ६० ॥

तथा पुनर्मरिश्चाऽसौ । बसवश्चेति सक्रमम् ।
कर्मधारयतोऽर्थोऽयं । निर्मित: शास्त्रवेदिभि: ॥ ६१ ॥

पितुश्च बसवाभिख्यात् । करडीशादयं सुत: ।
महानिति बुधैरासीन् । मरिशब्द: समर्थित: ॥ ६२ ॥

सा किल मरिबसवाख्या साधूनां श्रवणतुळकपुटपेया ।
सुरुचिरतरमधुरिमभररसालफलसद्रसालघुसुधारा ॥ ६३ ॥

रोदनादिगुणा नाऽऽसन् वेदनादिभवा मना: ।
मोदनाऽब्धिगणेन्द्रांशापादनाङ्गस्स तच्छिशो: ॥ ६४ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



श्रीरञ्जितः शिशुरसौ नववाललीलां
सारं लगन्नयनकैरवकौमुदीं ताम् ।
ऊरीचकार सुदृशां सुगतिप्रबोध-
कारीव शंशितशुचिः कलहंसबालः ॥ ६५ ॥

अथ स पृथुकः पृथिवीतलाऽवतरणप्रथितदुर्विधिग्रथितसङ्कटप्रमथनपटीयः प्रमथांऽशकत्वात्तथाऽथाकथापथापथिकस्ततत्कालाऽनुकूलां लीलाभालम्बमानो मूलप्रकृतिजालाऽन्तःकीलितमपि जन्तुजालमिदं लोलमस्तीति सविस्मयमालोकमान इव तत इतश्चाऽऽलोकयन्, किं च पञ्चाऽऽस्यगणसञ्चयप्राञ्चत्सदनसञ्चारघनसुखप्रदानचञ्चुचञ्चत्पञ्चाक्षरीमहामन्त्रस्य तद्बोधकगुरोश्च सद्भावेऽपि परेतपतिपुरातिपरिपरातिदुस्तराक्रमितदुरापदाकराले भीकराऽऽकारकरालनिरयान्तःपतनमाचरन्तीह चिरं त इमे मूर्खा इति तान् परं निरक्ष्य, हसन्निव हसन्लसन्मृडभक्तिविहीनाज्ञानाधानानां जनानां जन्म जहीति तद्विधूननमाचारन्निव करौ रसालकिसलयकान्तिसङ्करौ च मुहुर्मुहुश्चालयन् तापत्रयक्लेशपञ्चकाऽरिषट्क-व्यसनसप्तकादिकं पिण्डीकृत्य, सन्ताड्य तत इतः समुत्क्षपयन्निव चरणौ कलितकमलसुषुमाऽनुकरणौ च कुतूहलं शश्वदुच्चालयन् परात्परतरगुरुलिङ्गजङ्गमभक्तेश्च मनसि समचलितस्थिरतां प्रदर्शयन्निव सुदृढं समासनस्समार्यजनसन्निधौ चेत्थमेव सविनयं नम्रभावेन समाचरितव्यमिति तत्प्रकाशनदशाप्रबोधनमाचरन्निव जानुभ्यां विलोचनकुतुककामधेनुभ्यां च सम तान् मुहुः सञ्चरन् शिवमतसमयसदाचारसमुत्कर्षाय दृढबद्धकच्छसमुत्थित इव सरभसमसकृत् तत्र तत्र समुत्तिष्ठन् महितप्रभावभाविसुरुचिरगुरुलिङ्ग-जङ्गमसमर्चने मनोगतत्वरितसञ्चरणरतिं प्रपञ्चन्निव तत इतः सवेगं सञ्चरन्, किं च रञ्जिताश्चेम एव कामं प्रकामितमङ्गलफलप्रदानपटीयांस इतीव पुरा परतराऽऽदिमगिरामतितरां शुभकरानिव परान् सुशब्दानारभ्य, निखिलनामपदजालं सहेलं सुलोलः समालपन्नित्थं बालो लीलामालम्बमानः शिवसमयशरधिशशाङ्कः पितृमुख-

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


शङ्करकिङ्करसङ्कुलस्सप्रतिकलम् किलाऽकलङ्कस्सङ्कलितगुणसङ्करः प्रमदङ्कमप्यङ्कुरयामास;

शैशवदशातरङ्गिणीर्लीलामयकल्लोलमालामुल्लोलयन् सुजन-शिखावलसुखावहहर्षरसवर्षणवर्षासमयस्समयकरशिवसमयशशाङ्कः कल-ङ्करहितः प्रतिकलं किल पितृमुखशङ्करकिङ्करसङ्कुलस्य प्रमदं कमपि कुतुकसङ्करमङ्कुरयामास ॥ ६६ ॥

इत्थं वा भवतु;
शैलात्मजारमणसत्करुणाधुनीक-
ल्लोलावली विहरमाणमरालशावः ।
लीलालिमञ्जुलरसालवनीमनोज्ञ-
हेलाऽपि कस्समभवत् किल पञ्चवर्षः ॥ ६७ ॥

तदा पुत्रं चित्रं करविविधविद्यातिनिपुणं
चिदागारं धीरं जितविभवसारं कलयितुम् ।
मुदा शालां लीलाञ्चितबहुलभाषाविसरसं
पदा स्तव्यां भव्यां सपदि करडीशोऽनयदमुम् ॥ ६८ ॥

गुरुर्निरीक्ष्याऽस्य नयं सुशान्ति
भक्तिं च युक्तिं च कलाऽनुरक्तिम् ।
शिवप्रसादात् स्वयमेव हृद्यां
विद्यां मुदैवोपदिदेश सद्यः ॥ ६९ ॥

शाला-वालांल्लालयन् सद्गुरुं तं
सेवाल्या वार्यानुकम्पार्द्रचित्तं ।
कृत्वाधीत्वा स्कन्दवत्सलौघेन्या-
तः ख्यातः पूतसद्वृत्तसिन्धुः ॥ ७० ॥

साम-प्रसादतः प्राप्य । गुरुं भूत्वा बुधः कविः ।
भास्वान् समङ्गलश्चाऽथ । मन्दो नाऽभूत् कदाऽप्यहो ॥ ७१ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



इति विततसुविद्याराजतस्तस्य गात्रे
त्वतिचतुरिमसख्यं यौवनं प्रादुरासीत् ।
धृतिमतिमुखहेतुश्चान्त्यपक्षान्त्यसूक्ष्मा
कृतिगतविधुखण्डे पूर्वपक्षो यथावत् ॥ ७२ ॥

तारुण्ये चारुगात्रं गतवति तु मतिं चातुरी सा तु रीति–
गम्भीरा चित्तमास्याद्यवयवनिवमं प्राप सद्रूपमस्य ।
हृस्तं त्यागो मद्योपलवसुममधुसद्वासनावासभूमो
चूते भक्तिः फलं श्रीरिव विनयरसाभ्यन्तरास्वान्तरासीत् ॥ ७३ ॥

तारुण्याऽर्कोदये युक्तं । नयश्रीर्हृदयाऽम्बुजम् ।
भाग्यश्रीः प्राप दृक्पद्मं । दानश्रीः करसारसम् ॥ ७४ ॥

मरिव्रसवसुपुत्रस्तात सद्धर्मकर्मो–
त्करमहितसहायोत्साहसम्बद्धचित्तः ।
गुरुचरपरिचर्यां वर्धयामास भक्त्या
सरितमिव तटित्वान् पुष्करासारझर्यां ॥ ७५ ॥

एतादृशः सुतनयो विनयोज्वलश्री–
स्ताताऽतितोषजनको घनकोविदाढ्यः ।
जातो न कश्चिदवनेरवने क्षमश्चे-
त्याश्लाघयंश्च सकला-सुकला-कलापाः ॥ ७६ ॥

आस्यं तद्विधुदत्तदास्यममलं नेत्रं सरोजाहित–
स्तोत्रं दन्तगणः सुदाडिमचयानूनावमानार्पणः ।
नासाचम्पकरामणीयकपरिहासातिभासां निधिः
फालं बालसुधांशुगर्हणसमालोलः सुशीलस्य च ॥ ७७ ॥

वक्त्रेऽरविन्दं तु पदे त्वशोकं
श्वासे हि चूतं नवमल्लिकां च ।
स्मितेऽक्षिण नीलोत्पलमीशभक्त्या
बन्धीकृताः पञ्च शराः स्मरस्य ॥ ७८ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

सरसेनाऽम्बुकेनाऽस्य । सारसंकथमेषति ।
अकलङ्केन वक्त्रेण । राकाचन्द्रोऽपि चोपमाम् ॥ ७९ ॥

कामारिपादकमलाऽभिरतेन तेन
कामो निजाकृतिनियन्त्रित एव नो चेत् ।
कामं समीक्षितजनस्य मनस्यजस्रं
कामाशयं कथमयं जनयेत् स वत्सः ॥ ८० ॥

दग्धं सुमास्ते पुरशासनेन
रूपं तदीयं कमनीयकान्ति ।
विचार्य निर्भीति-निवास-हेतो
स्तद्भक्तमेनं ध्रुवमाजगाम ॥ ८१ ॥

गाम्भीर्यं शरधिं धराधरमरं धैर्यं क्षमा मेदिनी-
मौदार्यं सुरभूजरत्नसुरभीः स्वर्गस्रवन्तीं दया ।
पाणी चारुसुधाझरी मधुरिमा जित्वा परं तस्य तत्
सौन्दर्यं स्वयमेकमेव मदनं कायें जिगायेति न ॥ ८२ ॥

करडीशः स्वजनकस्तत्तोषजनकः स्वयम् ।
तद्युग्मजनकत्वं सज्जनमुज्जनक तथा ॥ ८३ ॥

तनयो घनविनयो यौवनयोगे चाऽपि पितरि सुजनौघे
ललितोन्नतिकलितो धृतिकलितो दहरोद्यमः स एव भुवि ॥ ८४ ॥

यः प्रीणयेद् गुणौघैः पितरं सुतरां स्वतस्तदनुकूलः ।
धृतिमन्तं मतिमन्तं सु-सुतं तं वृषवती प्रसूसूते ॥ ८५ ॥

तत्कायोपवनं गते सुललिते तारुण्यचैत्रे तु धी-
वल्ली पल्लविता तथा सुफलिताः सङ्कल्पशाखिव्रजाः ।
फुल्लं हृत्कुसुमं सुभक्तिमधुसम्पूर्णं सुपक्षोज्ज्वलाः
कान्तानन्तचराः सरागमभितश्चेरुश्चचारोत्सवाः ॥ ८६ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


अथ धृतनयः स तनयः पुनर्वसन्त इव बहुलपरागस्फुरणाचलित-सुमनोमनोज्ञा सत्फलप्रदागमसमूहश्रीसमुत्सेधकरः परं ग्रीष्म इव सन्ततं भृशं सकलात्मशीतलभुवनातिप्रीतिजनकतापहृतपरमतर्महिमप्रसङ्गः, प्रावृट्समय इव सकलजन्तुजीवनप्रदानचञ्चुचञ्चद्घनवैभवाभंगपूरित-निखिलाशः, शरत्काल इव स्फुरत्कामनीयकामृतकरप्रभावलीलानन्त-चक्रः प्रकाशनः, शिशिर इव जगत् जनककम्पनसम्पादकाविलासमहिमः प्रचारः कामं तथा हेमन्त इव समन्तादुपचीयमानातनुत्कलावैभवसम्-ज्जृम्भितसुदृक्षन्नागसमुदयमनः समुल्लासः, पुनः सागर इव सारसाम्ब-कारुण्यरसश्रीकटाक्षकान्तिकलितमङ्गलमयलक्ष्मीनिवाससमग्रस्वकलेवरः सुरतरङ्गिणीझर इव सकलसुमनोजनमनोज्ञनित्यसत्कर्माऽनुष्ठानाद्यनु-कूलस्वजीवनः, कमलाकर इव सारसरसरागालिकलितकविसद्विभ्रम-विलसितपरिसरः, विबुधराजवनप्रदेश इव, विपञ्चीमरीणरिव अनेको-त्तुङ्गगुरुसुरागरञ्जितः सारचातक इव सामन्तव्यूह इव सान्द्रघन रसाऽनुभवाऽभिलाषभरितः, हलन्त-समूह इव हरप्रिय-तिरुनलकण्ठा-र्यमुग्धसङ्गार्य-सुन्दरगणार्य-समवाय इव हर्षकर-शान्त-दान्त-कान्तव्यव-हारसमाश्रयः, विपुलमहादेवदेह इव वियदाभोग इव विविधसर्वमङ्ग-लादिविग्रहनिवासभूमिः, महामेरुरिव महीधरेन्द्रमनोज्ञशिवावासः, पुष्पसमयसमुदञ्चितलताद्रुमसमूह इव लसत्कुसुमोपचयसंवर्धितसदामोदः सदालिहितश्च, कमलसमवाय इव सदायंमादयसमयसमुदञ्चितविकासः, श्रितालिपोषणचणश्च; कुमुदसंमुदय इव सोमपादभजनसमुदञ्चिता-मोदः, सुदङ्नेत्रापादितसख्यश्च; तथा लोकबान्धवोऽपि सकलकलानिधिः, नुतसोमोऽपि पृथिवीतनयमहितनयः; सदामङ्गलोऽपि बुधः; सौम्योऽपि सुमनोगुरुः; विमलधिषणोऽपि बलवद्दानवकुलगुरुः; सुखविसमाख्या-नाऽपि सर्वदामन्दश्चाऽरुणकरजोऽपि घनतमः; प्रचुरदोषाकराहितोऽपि सत्केतुः; सद्धर्महेतुर्ज्ञातुं स्तोतुं धातुश्चातुर्याविषयसच्चरित्रविराजन् रराज परःजमौलिपद्सरोजपरागद्विरेफः ॥ ८७ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

नेयं जाती मरिबसवमहार्यस्य सत्कीर्तिकान्ता
नैयं ज्योत्स्ना तदमलतरोद्वान्तनेत्रान्तकान्तिः ।
नाऽसौ चन्द्रः स तिलकमुखं नेदमभ्रं शिरोजो
नेमास्तारा: कुसुममुकुलाश्चेत्यवन्दन् कवीन्द्राः ॥ ८८ ॥

मरिबसवसदार्यस्याऽच्छसत्कीर्तिचन्द्रे
परिलसति जगत्यामस्खलत्कान्तिसान्द्रे ।
किमु पुनरमुनैते ब्रह्मणाक्षिप्तमस्याः
[1]प्रशदमृनमयूखे[1]क्व प्रसक्तिर्मृगादेः ॥ ८९ ॥

एतादृशा तनुभुवा चरतर्पणे सं–
जातं बलं घनतरं करडीश्वरस्य ।
श्रोतस्विनी तरणशक्तिमतस्वतःस–
त्पोताऽनुकूलनमिवाऽधिचरः स नित्यम् ॥ ९० ॥

सनयं तनयं घनयौवनयन्त्रितरूपसुमशराभिनयम् ।
उपवीक्ष्य करडीश्वर उपयमकर्मणि मनोऽतनोदाऽऽशु ॥ ९१ ॥

"आदवानि" पुरि सौदरीकुले
श्रीदसन्निभधनी सुनीतिमान् ।
आदरार्चितचराऽङ्घ्रि-शोभनो–
घादिमोह्यलसदीश्वराऽभिधः ॥ ९२ ॥

सुरतरुणी समरूपा सुरतरुशाखायिताऽच्छकरशाखा ।
सुतनूस्तनूभवाऽस्य त्वत्तनूत्सवभाक्चराङ्घ्रि–सेवायाम् ॥ ९३ ॥

यथा बसवलिङ्गाऽम्बेत्याख्यायां मानसे तनौ ।
वृषेन्द्रशिवसंसर्ग–भासमाना समानघा ॥ ९४ ॥

बाल्ये प्रयातु कामेऽस्मिन् तारुण्येऽभिगमातुरे ।
हेमन्ताऽन्ते वसन्ताऽऽदौ वनश्रीरिव सा बभौ ॥ ९५ ॥

---

[1] प्रशदुपलसतीन्दौ "घ" पुस्तके ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



तरुणिमसुरभौ तदा तु तस्यातनुमनसीम्नितनुक्षिपत्पदेऽसौ ।
विकसदवयवप्रसूनपुञ्जचिदुदयपल्लवितेवसन्मनीषा ॥ ९६ ॥

सरसिरुहमुखी सरोजनेत्रा सरसिजपाणि सरोरुहाऽङ्घ्रियुग्म ।
सरससुमधुराधराप्यथो सा समननयनाऽङ्घ्रिसरोभवातिलोमाम्॥ ९७ ॥

पद्माशोकं सक्थिद्वयकदलिनाभी सरसि सु-
स्तनाम्भोरुट्कोशं नखरुचिसुमाञ्चद्भुजलतम् ।
[1]रदो तुङ्गं रागधरकिसलयं[1] घ्राणकनकम्
सकेशाल्यास्याक्ष्यम्वुजकुमुदमासीत् तनु-वनम् ॥ ९८ ॥

सरलं पदयुगलं करयुगमधरदलं चाऽतिरागपात्रं हि ।
वाला नीला विधिगत–कौटिल्य–प्राप्तबन्धनव्यसनात् ॥ ९९ ॥

मध्यं विष्णुपदत्वतश्च कृशतां प्रापेति वक्षोरुह-
द्वन्द्वं शम्भुपदत्वमेत्य सुतरां वृद्धिं गतं च क्रमात् ।
तत् सवीक्ष्य किलाऽक्षि-युग्ममगमत् कर्णान्तमीशाङ्घ्रि स-
द्भक्तिर्भव्यकरीति बोधयितुमाराजत् सुतेजस्थितिः ॥ १०० ॥

कुचः स्वयम्भूरलकश्च कृष्णो
धम्मिलभारः किल नीलकण्ठः ।
[2]क्रमात् तदुच्चस्थितिराह सेव
ब्रह्माऽच्युतेशस्थिततारतम्यम्[2] ॥ १०१ ॥

तस्या नव्य–वयऽश्रिया तु नयने वक्त्रं च बाहूस्तनौ
पाण्यङ्घ्रिप्रमुखास्तदा त्ववयवा रागाञ्चिताजृम्भिताः ।
मध्यं कार्श्यमगात् ततो जगति ते तच्चोत्तमा मध्यमं
चेत्युक्ता परसम्पदा व्रजति यो ग्लानिं स हानिं भजेत् ॥ १०२ ॥

---

1 मुखाब्जं दृङ् नीलाम्बुजमलकमृङ्गम् । 'ख' 'ग' पुस्तकयोरधिकः पाठः ।
2 त्रिमूर्तिभावावहमङ्गमस्यास्तुङ्गं कथं नेति शशंसुरार्याः । इत्यादि पाठः 'ख' पुस्तके ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


हातुं पूर्णकलानिधिस्तनुगतं शोषं कलङ्कं सदा
पूर्वाऽस्ताऽद्रि-युगे चरन्नुरुतपः सन्ध्या-द्वयेऽस्या मुखम् ।
जातोऽस्यान्तमगाच्च कैरवयुगं तोये तु जप्ताऽन्वहं
श्रीकान्ते नयने सतीष्टघटने शक्तो हि भक्ताऽऽश्रयः ॥ १०३ ॥
राकापीयूषधाम्ना नविकचकमलश्रीः समालोकितेना-
प्यञ्चत्पूर्णेन्दुलक्ष्मी[1]र्विधिरचित[1]मिदं नोचितं चेति शम्भुः ।
तद्द्वन्द्वं चैकतो जात्वचलितसुषुम निर्ममे सर्वकर्ता
किं वेत्यास्य दृशौ ता बभुरमलहृदा सङ्गमात् किं गरीयः ॥ १०४ ॥
आकर्ण्य वार्ता करडीश्वरोऽसौ
साकं गणैस्तां नगरीमुपेत्य ।
उवाच तं भक्तवरं प्रदेया
तवाऽऽद्य-कन्या गुणरत्न-मान्या ॥ १०५ ॥
सोऽतीवहृष्टश्च निधेरिवाप्ता-
वकिञ्चनो यत्यसदीश्वराऽऽख्यः ।
विकासयन् हृत्कुमुदं तथेति
स्रवत्सुधामञ्जुलगीद्रसारः ॥ १०६ ॥
आकारिता सा जनकेन कन्या
चरावलेस्तस्य पदेष्वनौसीत् ।
दृगञ्चलाऽऽभा-सुधयाऽभिषिच्य
स्मितांशुकुन्दालिभिरर्च्चयन्ती ॥ १०७ ॥
अम्भोजं लपनं दृशौ च कुमुदे गण्डे लसद्दर्पणौ
नासा चम्पकमेव दाडिमततिर्दन्ता जपा चाऽधरः ।
शङ्खश्चारु-गलः कुचौ तु कलशौ दीपा नखास्तत्पुरो
न्यस्ताऽर्चाविधियोग्यवस्तुततिवद् रेज सरोजेक्षणा ॥ १०८ ॥

तदनु, सदनुमोदरसपूरप्रपूरितहृदयहृदः स मदनारि-भक्तः सुदिने किल सदनाऽऽगतेन्दुवदना जनपद-नालीकचयचलितसरागपराग-

[1] बुधिरचित 'घ' पुस्तके ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



विरजितमङ्गलवस्तुसामग्रीसङ्ग्रहणसत्वरसञ्चारमिलद्धम्मिल्लान्तकान्तसीमन्तगलत्काश्मीररजःपुञ्जरञ्जितगृहान्तरालः सविनयं सबहुमानं समाहूतपुरारिपदभजनपरायणपौरजनपरम्परापरीतः शिवगणसन्तर्पणपुरस्सरं सुगुणमान्यया जगति धन्यायाश्च निजकन्याया वाग्दानमङ्गलकर्म विधाय, बहुविधायतहर्षं तं करडीश्वरं चकार च कारणपुरुषम् ॥ १०९ ॥

गणाम्बुधिर्मङ्गलदेवतां तां
शिवार्चकालीहरये सुताय ।
मोदामृतं सत्पथभाक् चरेभ्यो
ददौ यशोऽब्जं स शिवाय तस्मै ॥ ११० ॥

विवाहकार्यं स्वगृहे विधातुं
विज्ञापयामास विबोधसिन्धुम् ।
अङ्गीकृतः सोऽपि तथेति साकं
चरैः सलीलं स्वपुरीं प्रतस्थे ॥ १११ ॥

सुराधिपसराजसम्भवमुरारिमुख्याऽमरो-
त्करावलिकराब्जकुट्मलकराक्षिकक्चन्द्रिके ।
सुरागरुचिराधरारुणसुरोचिरापाटले-
श्वराङ्गसुचिरालये परिकिराऽम्ब देवि श्रियः ॥ ११२ ॥

इति श्रीविनमदमरवरनिकरमौलिमणिप्रभापटलपाटलपरशिवपदार-
विन्दस्यन्ददमन्दकृपारसमरन्दझरीपरितृप्तिमदुरेन्दिन्दिरायमान-
मानससरसकविताकुतुकाकलितपर्वतसुधीविरचिते
करडीशचरितामृतचम्पूप्रबन्धे तृतीयः स्तबकः ॥



॥ श्रीरस्तु, श्रीरस्तु, श्रीरस्तु ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

॥ शम्भो ! प्रसीद ॥

# चतुर्थः स्तबकः

वन्दे शम्भुं शशाऽङ्कांऽशु-कुन्द-सुन्दर-सज्जटम् ।
वन्दत्सन्दोह-मन्दार-मन्दराऽचल-मन्दिरम् ॥ १ ॥

अथ सुपथचरः सदीश्वराख्यः शुभगविवाहकृते सुमण्टपं तत् ।
अति-विमलमकारयत् प्रकारान्तरमतिनूतनतरङ्गिताभम् ॥ २ ॥

भास्वत्तोरणराजिराजितमहामुक्तावितानावली
संशुम्भन्मणिमालिकातिविलसद्भर्माम्बराड‍म्बरम् ।
भव्यं मण्टपमीक्षकालिचलदृक्कारा च सारङ्गहृद्-
भृङ्गाली कमलाकरः समभवत् पद्माकरो यत् स्वयम् ॥ ३ ॥

अनन्तमणिदीप्ताऽपि कलानिधिविलासभूः ।
अगजातिमनोज्ञाऽप्यविकलावलिमण्डिता ॥ ४ ॥

अबलावली-रम्याऽपि विलसद्विक्रमाऽञ्चिता ।
विशालाऽपि सशालालि शुशुभे मण्टप-स्थली ॥ ५ ॥

दीपोद्भासितकाचभाण्डविसरो राजद्विवाहोत्सवं
श्रुत्वा चारणवक्त्रतो भनिकरस्त्वासाद्य रूपान्तरम् ।
द्रष्टुं मण्टपमाययाविव तथा पाञ्चालिकालीमरुत्
कान्ताली सधवा निजाधिकशुभाकारौ कुमारौ च तौ ॥ ६ ॥

सायं कांचन मण्टपाऽग्र-कलशद्योतं प्रभात-प्रभां
मत्वा देवधुनीरथाङ्ग-मिथुनैश्चालं मदालंबिता ।
अभ्राज्यब्जचयश्रिया कुवलयैरश्रायिनिः श्रीकता
कालेकारि सुरम्यतश्च नियमस्नानं हृदानन्ददम् ॥ ७ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


मुक्तापुञ्जवितानतानवलसत्पुष्पौघमालाकुलं
पश्यच्चित्तविकासकासमकनत् पाञ्चालिकं मण्टपम् ।
कान्ताकारकपोतपोतशिखिसत्कोरादिचित्राऽङ्कितं
संशुम्भत्कलशालिशिखिरस्फारं किलारं बभौ ॥ ८ ॥

सुललितं पुनस्तन्मण्टपं सुरेन्द्रभवनमिव सुरमण्यतनुसुरागसुकर-सुरभिसुरुचिरसुमनःप्रसरमनोज्ञं, सत्यलोकस्थलमिव सारसासनप्रमुख-विबुधेन्द्रवाणीविलासकलाकलापं, विष्णु-विष्टपमिव विराजमानसु-स्थितिश्रीविहरणस्थानं, महेश्वर-स्थानमिव मनोज्ञपरमहिमसारादि-मण्डित, वियत्तलमिव विपुलविनोदविमलविविधविद्याधरविमानप्रचा-राऽऽश्रयं, गगनसरिज्जलमिव गणाधिपसंसर्गाऽभिजाताऽभिजात्य. पुनस्त्रिदशजननेत्रानन्दकरमपि बहुलक्षजननेत्राऽऽह्लादकरं, विविधवि-चारविश्रान्तिस्थलमपि अकुजातिसंक्रान्तं, कुवलयानन्दकरमपि नाली-काश्रयं, सदानवश्रीकमप्यधरीकृततरणिप्रभं, सुमनोजनमनोविनोदप्रदं च सुमानसप्रिय-स्थलमपि कुजनावलीविलासाऽऽस्पदं, सुमङ्गलवागेका-श्रयं चाऽऽसीदासीनकल्याणकर्मनिर्माणम् ॥ ९ ॥

आकीर्णसन्मङ्गलवस्तुवर्ग-
मामुक्तमालाकलितान्तरालम् ।
आसन्नमाङ्गल्यविधेर्निशान्त-
माकारभाङ्-मङ्गलवच्चकासे ॥ १० ॥

ततश्च,

समागमार्थं करडीशतुस्ततो
समागमाच्चार-निधेर्निजान् जनान् ।
समानगाम्भीर्यहृदः स चाऽऽत्मना
समानगादाऽऽच्छ-वचोभ्यबोधयत् ॥ ११ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

आकारितस्थैः करडीश्वरोऽसा-
वाकारणात्मा सह बन्धुमुख्यैः ।
आकारपूर्वेण च नन्दनेन
साकारभाजात्मभुवा प्रतस्थे ॥ १२ ॥

अश्वांश्च केचिद् द्विरदांश्च केचिद्
रथांश्च केचिच्छिबिकांश्च केचित् ।
आरुह्य सर्वे चरपुङ्गवोघाः
स्वशिष्यसङ्घैः सह संप्रतस्थुः ॥ १३ ॥

आचार्यपूगा घनभव्यभोगा
मताऽनुरागा बिरुदाऽभियोगाः ।
ययुः सुवेगाश्च मदान्धनागा
धरापरागाऽऽवृत-दिग्विभागाः ॥ १४ ॥

सदा सदाचारहृदः पदानता
पदालिशैलौघभिदा पुरन्दराः ।
मुदालसत्तत्त्वविदस्तदादृता-
स्तदा ययुः केऽपि चिदात्मभासुराः ॥ १५ ॥

कलावलीलालसुसद्बुधाली-
मिथोनुलापायतशास्त्रकेलिः ।
वचःप्रसूनाऽऽदर-सज्जनालि-
र्ययौ सतीर्थ्यादिमशिष्यपालिः ॥ १६ ॥

सगुणाः सालङ्काराः सरसाः सल्लक्षणाश्च सद्वृत्ताः ।
समुचितपदार्थसहिताः कवयः कवितेव सुन्दरा जग्मुः ॥ १७ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



दिग्भिः प्रसूता इव दिग्विदिग्भ्यः
काशाम्बरापिङ्गलिताऽखिलाऽऽशाः ।
संख्यातिगाः संप्रययुः सरागाः
समं समं भूरि-गणाः सुताद्यैः ॥ १८ ॥

वक्त्राण्यम्बुरुहाणि कैरवकुलं नेत्राणि नासालसत्
चाम्पेयाश्च रदाः सुदाडिमततिर्भास्वज्जपाश्चाऽधराः ।
वल्यो बाहुचयास्यया किसलयान्यम्भोजकोशाः कुचाः
रम्भासक्तिगणागमन् सुदयिता केलीवनालीव ताः ॥ १९ ॥

केचित् तत्करडीशदर्शनधिया केचिद् विवाहोत्सवं-
प्रेक्षेच्छाभरितश्च केचिदमृतस्वादौदनादि-स्पृहाः ।
केचित् पण्डितमण्डलीकविलसत्सल्लापलीलारसाः
केचित् तत्र महात्मनां पदतलाऽऽलोकाय लोका ययुः ॥ २० ॥

सन्ताड्यत्पटुभेरिकाहलमुखा दध्वानुरध्वानसा-
रुन्धन्तः ककुभा विवाहविधये चाऽऽहूतवन्तः किल ।
दिक्पालान् विधि-विष्णुमुख्य-विबुधान् साम्बं शिवां साऽऽत्मजां
शक्तीर्नन्दिमुखान् गणानतिचणान् रुद्रान् विपद्रावणान् ॥ २१ ॥

उत्तुङ्गद्विरदाभयागतनगास्तङ्गत्तरङ्गाहया-
श्चाऽऽचार्यौघदिवाप्रदीपबिरुदाल्यौर्वैस्त्वखर्वद्युतिः ।
भूषामौक्तिकरत्नविद्रुमगणो व्यक्ता हि मुक्तादयो
रेजे श्रीप्रभवत्वतस्तनुभृतां वारा हि वाराशिवत् ॥ २२ ॥

दालीतण्डुलपिष्टमुद्गचणकद्राक्षासितासद्गुडो-
त्खर्जूरादिसुवस्तुभारशकटोच्चक्रालिघातोत्थितः ।
क्षोणीरेणुभरः परं सुरसरित्-पूरे च नीरेरुहे
चक्रे यौगिकमेव पङ्कजपदं बाढं हि रूढं चिरात् ॥ २३ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


इत्थं, अनन्त-विभव-प्रतानस्ततानघचरित्रः करडीशः सानुरागं सलीलं ससम्भ्रमं सकौतुकं सभक्ति 'भक्ताऽङ्गं पृथिवी'ति प्रथित-वचनमन्वर्थयन् सकलभारवाही सर्वंसहः शान्तिरसः इव मूर्तिमान् धरा-तलमवतरच्चरत्सुरन्महीरुह इव घनतर-गाम्भीर्यः पाथोधिरिवाऽम-रमहीधर इवाऽतिद्रढिमधृतिर्विततनयेन तनयेन मारमर्दनैकभक्तत्वात् स्वयमपि महितरूपजितमदनेन चारुवदनेन कुन्द-रदनेन सुगुणमणिसदनेन साकं भूकंपनकर-बहुलतरसङ्घसमन्वितश्रीकण्ठभक्तशिखामणिः मार्गे तत्र तत्र विनिवेश-क्रमेण यथाऽभिलषित-सर्वसंघसन्तर्पणादिकं सबहुमानं, सहेलं, सरसं विरचय्य, मध्ये पञ्चदिनानतिवाह्य, पुनः सदीश्वर तदीश्वरार्यपुरीं शनैःशनैरवापतां शिवाधवादवाप्तवैभवाति-सम्भवायतोत्सवाऽञ्चितः । ॥ २४ ॥

सद्वर्यं करडीश्वरं शिवकलाऽऽगारं चकोरालिवत्
दृष्ट्वा पूर्णमहोदयं च सुमनो-वृन्दं ननन्दोचितम् ।
यावन्मानव-भासुराक्षिततये साक्षात्तदीक्षात्वहो
तन्नामोपपदार्थवच्च रसना जाता यशात्प्रदा ॥ २५ ॥

प्रत्युत्थानादिकर्मप्रकटितविनयः प्रापितप्राज्ञवस्तु
प्राग्भारः प्रस्तुताद्यत्कृतिनिपुणमतिः प्रश्रयल्लीढचेताः ।
प्रावीण्याङ्कः प्रतीतप्रबलजनततिप्रावृतश्चेश्वरार्यः
[1]प्रारब्धोद्वाहगेहानयनकृतकुमारोत्सवप्रक्रमोऽभूत् ॥ २६ ॥

प्रतोलिकाप्राङ्गनवतोरणाद्यैः
परिष्कृता पौरजनः सकंकम् ।
निकेतनं केतनमालिकाद्यैः
स्वं स्वं सतो भक्तिपथैस्तथैव ॥ २७ ॥

---

[1] प्रारेभे पूः प्रतोल्यां प्रचुरतरकुमारोत्सवप्रक्रमं तम् । 'ख' पुस्तकेऽधिकः पाठः ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



पुरं परिष्कारपरं पराभिः
सुरञ्जितं दीप्तिसुरङ्गभूमिः ।
कुरङ्गनेत्राभिररंसुसौधो-
त्करङ्गताभिश्चकरं भिताभिः ॥ २८ ॥

ततः समारुह्य मतङ्गमुद्यत्
दानाऽम्वुधाराभिनिषिक्तरथ्यम् ।
रेजे कुमारः किल वर्षदम्भः
कालाम्वुदारूढ इवाऽमरेन्द्रः ॥ २९ ॥

सन्ताड्यद्भूरिभेरीपटहपटुरटत्काहलीमुख्यवाद्यद्-
ध्वानो नानाधरित्रीधरनिवहगुहां स्वर्धसंवर्धमानः ।
कूर्मं चोद्बोधयन् दिक्करटिकुलमहाकर्णतालान्निरुन्धन्
सम्भिन्धन् स्वं कवाटं प्रमथगणमनो रञ्जयन् संजिजृम्भि ॥ ६० ॥

तदा तु तौर्यत्रिकमञ्जुघोषा
स्वर्मञ्जुघोषादिभवा इव स्युः ।
सुराजजिष्णु-च्युतमङ्गलोद्यत्
बुधादिमामोदकराः सुरागाः ॥ ३१ ॥

अमृतरुचिमरीचिस्फारमुक्तातपत्र-
द्युतिपिहितमहासौधाग्रविभ्राजितासु ।
लसदसमकुमारं निर्निमेषाऽक्षि वीक्षद्-
युवतिषु खचरस्त्रीकान्तिरालोकिलौकैः ॥ ३२ ॥

सन्द्रष्टुं सौधसवास्तवनवयुवतीकान्तनेत्रान्तकान्त्या
कान्त्याश्वेतद्विपस्थोन्मिलदमितगणाऽऽलोकने निर्निमेषः ।
जिष्णुः स्वस्थः परीतो विबुधसमुदयैः सद्गुरुक्तौ सुराग-
श्चेति स्तुत्यः कुमारो हृदयमनयदाऽखण्डलं पण्डितानाम् ॥ ३३ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


विस्रस्तनीवीनिहितैकहस्ता–
त्वन्नेन काचिद् गलदुत्तरीयम् ।
उद्यम्य शश्वद् विदधे स्तनाऽञ्चत्–
कश्मीरधूली–कलितां प्रतोलीम् ॥ ३४ ॥

अतिकुतुकादृतदृतगतिरतयागतचोलिकाप्सुरोजतटी ।
मणिघृणिपटली पट–लीनतया नतयाऽप्यबोधिनृभिरपटी ॥ ३५ ॥

तत्सन्दर्शनलौल्यधावनभराद् विश्लिष्टचोलाऽञ्चल-
ग्रंथेर्मौक्तिकमालिकान्तरनटद्वक्षोजकुम्भद्वयम् ।
कस्याश्चित् कमनीयतामगमदाबिभ्रत् [1]सुपर्वाऽऽपगा–
पूरक्रीडितचक्रवाकयुगली लीलामवेला तदा ॥ ३६ ॥

फालाञ्चले तीव्रतराल्ललामं
सस्याऽञ्जनं काचन नासिकायाम् ।
सौधं गताऽऽलोकन–दत्त–चित्ता
हास्यं तदास्ये जनयज्जनानाम् ॥ ३७ ॥

ससम्भ्रमं सौधतलं चलन्त्याः
पतन्सशब्दं भुवि नूपुरः स्वः ।
निन्दन्न लीलां गतिमाचकासे
पश्चात् स्थितो हंस इवाऽनुयायी ॥ ३८ ॥

कस्तूरीतिलकं निधाय निटिले जालंगतायाल्लसत्
तोषोन्मेषतत–स्मित–द्युतिनवज्योत्स्नावलीढं मुखम् ।
कस्याश्चित् किल फालमूलतलसम्बद्धाञ्जलिव्यानत
रेजेऽधःकृतपद्मकोशविधुवद्रामाभिरामावली ॥ ३९ ॥

---

[1] सपर्वाऽऽपगाम् 'घ' पुस्तके ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



सौधाग्राक्रान्तकान्ताञ्जनविशदकटाक्षातिधावल्यभास्वद्-
दोर्वल्लीपल्लवाऽञ्चत्करयुगलगलन्मल्लिकापुष्पपुञ्जाः ।
शुभ्राऽभ्रारूढविभ्राजितसुरसुदतीपाणिपङ्कजमुक्ता
मर्त्यक्ष्माजप्रफुल्लोद्गमततिरिव तस्याऽपतंश्चोपरिष्टात् ॥ ४० ॥

मुक्त्वा वीणां प्रवीणा समसरससखी लालितामक्षकेलीं
चालीपाणिं सुवेणीं परिगलितसन्मल्लिकापुष्पवर्षैः ।
सोपानालीं सगन्धां परिरचितरतीपूर्णयाऽऽरुह्य सौधं
श्रान्ता वक्षोजभारादपि सकुतुकमानन्ददं तं ददर्श ॥ ४१ ॥

वीणां धृत्वैव पाणौ सरभसमजिरोद्यातिवेगोत्थवायु-
स्पर्शेन प्रक्वणन्तीमतिधवलिमसंच्चीनचेलाऽङ्किताङ्गी ।
कर्पूरक्ष्वेदपङ्काऽङ्कितसकलतनुः काचिदम्भोजनेत्रा
वाणीबुद्धिं जनानामजनयदनिमेषेक्षण वीक्षमाणा ॥ ४२ ॥

धम्मिल्लश्च शिखावलोक्षियुगलं तत्खञ्जरीटद्वयं
वाणीराजशुकः पिकः किल गलः कोकद्वयं तौ कुचौ ।
हंसो मन्दगतिस्सतीतिकं रहो धात्राहितेवावभौ
सत्पक्षीव्रजहेमपञ्जररतिर्नीराजनाराजिता ॥ ४३ ॥

भव्यश्रीकरडीश्वरस्य सुमहान्नन्दीशरूपस्य सत्-
पुत्रो नेत्रचकोरपारणविधुश्चाऽयं समायास्यति ।
सख्यस्सन्नमताऽऽशु सन्नमतचेत्यागत्य वेगोन्नटद्-
वक्षो दत्तसुसाह्वमानमनमन् रामाः सुसामाञ्चिताः ॥ ४४ ॥

याने हंसगतिं जिते च हसिते कुन्दान् समन्दं किर-
त्यस्तोकं नवचन्द्रिकाप्रसरणं तन्वत्यपाङ्गद्वये ।
वक्षोजातनितम्बमण्डलभरे माद्यंगतेर्वधंय-
त्याजग्मुर्वनितास्तता विलसिता नीराजनाराजिभिः ॥ ४५ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


नीराजनौघैर्नखदीप्तिजालैः
साकं स्मिताऽच्छद्युतिभिः सुलाजैः ।
जय-स्वनैः कण्ठसुरञ्जनाभि
सम्भावयामासुरमुं पुरन्ध्र्यः ॥ ४६ ॥

तदनु तदनुराग-रसपूरितमानस-मानससरः-सरस-सवयोदत्तहस्तं हस्तेनाऽवलम्ब्य, कमलेन कमलमिव हस्तिवरादस्ताऽचलासुधामूतिरिवाऽवनीं साऽवहेलमसाववतीर्य, मनोरथसिद्धिद्वारमिवोद्वाहगोहद्वारं प्रविश्य, पुरोधाय जयं तं, जयन्तः सुधर्मामिव संसदंसदिन्द्रेण गुरुणा विबुधैश्च मण्डितां तां समन्तादवलोकमानो नाक इव भास्वत्कलाप-मङ्गलसौम्याधषणकविमहामन्दमण्डिते तत्र सदसि चित्रतरचरित्रा शिशव इव एकान्ता जननी रागरञ्जितावनभूमय इव सदाल्यामोदप्रद-सुमनःप्रसरपरिवृतोपकण्ठाः सरससत्कविप्रणीतप्रबन्धा इव विमलपद-विन्यासप्रकटितसदर्थादयस्तेषां महात्मनां गुरुचरेन्द्राणां पावनपाद-पङ्कजपालीषु प्रणमन् किमिदममृतांऽशुः कमलानि सामोदं पुनः पुनः क्रमेण चुम्बतीत्याश्चर्यं जनानां जनयन् भक्तानभितोऽभिवीक्ष्य बाल-सुधांशुं कमलकोशमुपनयन्निव फालमूले हस्ताऽञ्जलिं निधाय, विधाय वन्दन, सविधवर्तिवयस्योपदर्शितमङ्गलवेदिकामध्यास्त कुमारः कला-सुकुमारः सुकुमारः ॥ ४७ ॥

आयास्यद्रुचिरुन्द्रचन्द्रवदनाकान्ताम्बकान्तद्युति
ज्योत्स्ना सन्द्रवदिन्दुकान्तमणिसद्वाराम्बुपूरे तदा ।
उद्वाहोत्सववीक्षणाऽऽदरसमागच्छज्जनाः पाणिप-
न्मुख्यं क्षालनमारचय्य विविशुः कान्तं तदंशस्थलम् ॥ ४८ ॥

रागाधरागः कृतपद्मरागा
रागावली मञ्जुलकण्ठभागाः ।
रागादयुः कामकलाकुला सा
रागाग्रहृद्द्वार-वधूः प्रपूगाः ॥ ४९ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



वाराङ्गनासुन्दरवक्त्रचन्द्र-
प्रतिक्षरद्गानसुधा सुधाराः ।
निपीय कर्णौ सुमनःसमूह
ननन्दुरेवं सरसाश्चकोराः ॥ ५० ॥

सङ्गीताऽऽगमसार-सारसदृशां वक्त्रेन्दुरुत्फुल्लतत्-
प्रौढ्यालोकनिकामकामजनदृङ्नीलाऽब्जमालाकुलम् ।
तद्वन्नात्यविलालनयनादृग्भागरुग्भानुजा
गङ्गाशोणतरङ्गरङ्गमलसत् संमञ्जुलं मण्टपम् ॥ ५१ ॥

तदा, सदा सदाऽऽदृतसद्धर्मसमुदयसमर्थकसरससकलशास्त्रार्थ-समवलोकनसञ्जनितसत्यार्थसम्यग्ज्ञानसस्कृतचित्ततया परमरागिणोऽपि परमरागिण इव सहृदयहृदयाऽम्बुजातरवयः कवयो नवयौवनवर्तीर्वारयुवतीरलोक्य, श्रुतिमुख्यप्रमाणवाक्यप्रतिपादितस्य निखिलरसप्रधानस्य श्रृङ्गारस्याऽऽत्मभिः शास्त्र-सरण्या वर्णनीयतया तद्रसप्रवाहपूरिततरङ्गिणावद्रङ्गन्मङ्गलाऽङ्गास्ताश्चेत्थमवर्णयन् सुवर्णमुखरमुखाः । ॥ ५२ ॥

नेमाः स्त्रियः कलितकाञ्चनकञ्जवल्यो
नेमास्तनविलसिता मुकुलाम्तदीयाः ।
नास्यान्यमूनि विकचानि सरोरुहाणि
नैवालिकावलिरियं तु मिलिन्दपङ्क्तिः ॥ ५३ ॥

दृशौ तीक्ष्णे श्लक्ष्णे विषभवसखं चारु च मुखं
कचः कालो लोलो जनयतु जनानामुपहतिम् ।
कुचौ मुक्तासक्तौ परमहिमसारौ कथमिमौ
व्यथां दत्तश्चित्ते प्रकृतिकठीणान्नां क्व करुणा ॥ ५४ ॥

रामः कामं समुद्यत्कुलगिरिशपिकार्कस्य चाञ्चल्ययुग्मं
कर्षं कर्षं नतभ्रूकुचनयनयुगे चिक्षिपन्नो तथा चेत् ।
शैलाः कोलाः कुतोऽब्धौ तदनुश्रुतिपथेवानरामानरागा-
श्चित्रे गात्रे शिरीशस्रदिमवति कथं गाढकाठिण्यतैक्ष्णे ॥ ५५ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

अबला एव प्रबला नटदगयुगलं धरन्ति चिरमुरसि ।
जातु विधृतैककुधरादीशाऽस्मीशादसुरहितविनाशात् ॥ ५६ ॥

केशाश्चिरादतनुधर्मगुणः प्रकाशा–
स्त्वास्यं द्विजातिपतिभव्यकतौघलास्यम् ।
अङ्गं सुवर्णरुचिरांशुकसारसङ्गं
योषास्ततो हि सुतरां सुमनोभिलाषाः ॥ ५७ ॥

वक्त्रं पङ्करुहं ललत्तिलसुमं नासासुहासस्यरन्
मल्लीकैरवमेव लोचनमयं बन्धूक एवाऽधरः ।
वक्षोजौ मुकुलौ कनत्तनुरियं वल्लीमतल्ली तथा
नो चेत् किं भुवि बभ्रमेयुरसमुञ्चित्तालिममत्तालयः ॥ ५८ ॥

हस्तौ सुरागमहितोत्कटप्रशस्तौ
पादौ निराकृतविपल्लवविप्रमोदौ
वामौ स्तनौ विमलहारगणाऽभिरामौ
के वा स्तुवन्ति महिला नहि लग्नभावाः ॥ ५९ ॥

रम्भास्तम्भाऽग्रदेशे घनपुलिनयुगं न्यस्य तस्योर्ध्वभागे
कूपं चाऽभ्रे तदूर्ध्वे नटपचलयुगं शङ्खमग्रे परस्तात् ।
चन्द्रं तत्राऽब्जयुग्मं तदुपरि धनुषी चन्द्रखण्डद्विरेफ–
ध्वान्तं चित्रं विधात्रा भ्रमयति सरसामोदनाऽऽपादनाय ॥ ६० ॥

सत्यं पद्मामदं मुख वसुमतामोदं विधत्ते ततो
नेत्रे ते भजतो मुद कुवलये नित्यं कलावत्यतः ।
तन्नित्यं सरसाऽनुमोदकसुधा शब्दौघहृद्रञ्जना
व्यप्रालि व्रज सङ्गमस्यमुचितो वश्यं हि वेश्याजने ॥ ६१ ॥

तत् कथमिति चेत्––

पद्मे सङ्कुचिते दिवा विलुलित ध्वान्तं समन्ताद् विधो–
स्तारालीगलितां मृताऽञ्चिततला निर्वात्यखर्वाऽनिलः ।
कञ्जाख्यां यमुनाझरै गिरियुगं सिक्त्वान्नभः सिञ्चतो
मा गच्छाद्य गुणीनृगतो यदि सुराचार्यश्च निर्यात्यसौ ॥ ६२ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


इत्थं चमत्कृतिवचोनिचयाऽभिरञ्जका
कालीजनाहितमनीषितसर्वसिद्धिः ।
वाराङ्गनावलिरियं प्रतिभाति नित्यं
सारङ्गदृङ्मधुकराब्जसरस्थलीव ॥ ६३ ॥

सायं वक्त्रसरोरुह सुमुदितः श्रीसन्नियुक्तं दिवा–
प्येवं लोचनकैरवं किल कथं वाराङ्गनानां तु चेत् ।
सत्काश्मीरललामबालमिहिराऽपाङ्गप्रभाचन्द्रिका
सान्निध्याविदमित्यशेषसुधियो निन्दन्ति नन्दन्ति च ॥ ६४ ॥

भ्रूश्चापो मदनस्य पक्ष्मविततिर्ज्यालोचनं चाऽऽशुगो
वाणी चाकधोगलत्किल भटस्तच्चन्द्रहासः स्मितम् ।
प्रासादस्तनमण्डल त्वशिलता सा रोमराजियंत–
स्तत्तस्याऽऽत्मभुवो जये प्रतिभुवो धारा हि वाराङ्गनाः ॥ ६५ ॥

इति सविलासं कविलोके गदति सुदतीजनेषु, निरादराधराचरा हरावराश्चरेश्वराः परात्परा भवाऽनुभवसौख्यसागरा सद्धर्मपद्मा धुरं धरं चिरं निरन्तरं स्थिरं सुरञ्जितं सोपहास सस्मितमिदमूचुः ॥६६॥

सत्यं किं वदनं विधुश्च रदनाः कुन्दाः किमिन्दीवर–
द्वन्द्वं किं नयन–द्वयं किमलका भृङ्गा किमङ्गं तटित् ।
भीष्मग्रीष्ममरीचिकाजलझरीं मत्वा तु तत्पार्थस–
म्भ्रान्ता हन्त मृगा इवाऽतिकुधियः काम्यन्ति ताम्यन्ति च ॥ ६७ ॥

ताम्यन्ति च सुदृशसमसद्विमलदृशा ।
भृशं विविच्य विलोकयन्तु भवन्तः ॥ ६८ ॥

कञ्जं वक्त्रं प्रतिदिनगलत्दुर्भरश्लेष्मपुञ्जं
रक्तं बिम्बं दशन–वसनं रक्तमांसाऽनुषक्तम् ।
शैलौ वक्षोरुहयुगभरः क्रव्यपिण्डप्रकीलो
हेयः कायः कविमधुरवाग्वाहिनीमोहनीयः ॥ ६९ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

सुमती समतत्वमाकलय्य सुखं
स्थातुं दुर्बुद्धिप्रसरणप्रशमनं
सशमदं निशमय . . . ॥ ७० ॥

दुष्कर्मस्तोमहर्म्ये दुरितनिजगृहे दुर्मनीषानिदाने
दुर्वारभ्रान्तिवल्लीवनभुवि च दुराचारसञ्चारसीम्नि ।
दुर्धर्षापारदुःखावलिविकटनदीप्रावृषि स्त्रीविकारी
दुर्यन्त्रे को भ्रमेत प्रकृतिकुशलधीः प्राज्यसौख्याऽभिलाषी ॥ ७१ ॥

मरीचिकायां सलिलभ्रमोऽयं
मृगावलीरेव न पूरुषाणाम् ।
तथैव कान्ताजनसङ्गसौख्य-
भ्रमो जडानामजडात्मनां किम् ॥ ७२ ॥

मोहारण्ये प्रचारं कुचकुधरतटी क्रीडनं कामनीना-
माशाशाखावलौ चङ्क्रमणमतितरां भोग्यधल्लातधीनाम् ।
भुक्ति भ्रूभङ्गतीक्ष्णेक्षणविकटमुखं सर्वसन्तर्जनं सं-
कुर्वाणौ सान्द्रचेष्टाकुलविकलधियो वानरा वा नरास्ते ॥ ७३ ॥

भक्ता वधूजने चिद्यूक्ताः कपटे बुधोक्तिषु विरक्ताः ।
भक्तिज्ञानविरागासक्ताः बहुलाः कलौ गुणैर्मुक्ताः ॥ ७४ ॥

कामक्रोधादिहिंस्रावनविमलवने वञ्चनाऽम्भःसरस्या
यायामोहातिशाठ्यानृतकपटकुधीसान्द्रसस्यालिधात्र्याम् ।
दान्तिः क्षान्त्या प्रमा चिन्मुखललिततादुर्लवित्रे गुणाली
शस्त्रे वाराङ्गनायां निवसति च सुधीः किं सुखं शंसयाऽत्र ॥ ७५ ॥

रम्या भृङ्गकुलालकाविधुमुखी पङ्केजपत्रेक्षणा
ज्योत्स्नापाङ्गरुचिः सुकुन्दरदना बिम्बाधरेति भ्रमात् ।
पश्यं पश्यमतीव मूढधिषणा मुह्यन्ति नीतत्वतो
विण्मूत्राद्यशुचिप्रसेचकसुषिव्यूहो हि देहो न किम् ॥ ७६ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



नैवाङ्गं कनकं कुचौ न कलशौ कम्बुर्न कण्ठोऽधरो
नो बिम्बं नरदास्यदाडिमततिर्नासा न चाम्पेयकम् ।
नैवाऽक्षिद्वयमुत्पले न च मुखं चन्द्रो न भृङ्गाः कचाः
सत्यं कृत्तिपलाऽस्थिलोहितमये हेयेऽत्र कार्येऽस्ति किम् ॥ ७७ ॥

तत्र कश्चिन्निश्चितमतिर्निजनिरतिशयविरतिभावालक्षितजगज्जालाफालाक्षलीलावतरश्चरवरस्सहेलं सस्मितमिदमवादीत् ॥ ७८ ॥

सुवर्णभूषादिविशेषरञ्जना
जनाम्बकामोदकराह्युपानः ।
स्पृशत्यशङ्कं खलु पुल्कशास्तथा
जडः प्रियास्ताज्जडजातलोचनाः ॥ ७९ ॥

तदा तदाकर्ण्य सदा चिदानन्दमया मुदा ।
तत्त्वविदो जगदुर्जगदुल्लासकरमिदं वचः ॥ ८० ॥

"अये ! संसारसागरसमुच्चलद्दुःखाद्युल्लोलकल्लोलनिरन्तरप्रधातविस्मृतिविह्वलताततत्त्वात्सत्त्वाः सन्ततं धनकान्तादिचिन्ताक्रान्ताः कान्ता भवन्तु मा भवन्तः सान्तः स्वान्ता दान्ताः श्रृण्वन्तु धीमन्तः । ॥ ८१ ॥

अङ्गं भङ्गुरभङ्गरिङ्गणसमं सम्पच्च सम्पा–समा
भोगाश्चाऽगतटोत्सरज्झरसरित् कल्पास्त्वनल्पा अपि ।
कान्ताश्चाऽन्तरिताऽरुणोदयनिशालीलाश्वलोलायिति
ज्ञात्वा तत्त्वविदो मदोदयभिदो भूयास्त यूयं बुधाः ॥ ८२ ॥

ससारे दुःखसारे किमु वसति सुखं चक्षुषां लक्ष्यवाणी
भोगाः पुण्यैकयोगा दधति च विलयं श्रीविनष्टे तु तस्मिन् ।
नित्यं पुण्ये विरोधः स्फुरति तनुभृतां कीर्णमायाबलात् ते
लब्धाश्चास्याशुनष्टांस्तदतिपटिमदुर्वासना शासनीया ॥ ८३ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


ततोऽञ्चितोचितोन्नतोन्नताऽभवमताऽमलतताऽऽचारललिता गुण-
कलिता नयमिलिता मतिदलिताल्पमतावृथा वागद्वैतभागार्थाऽनुरागा-
तिचपलदुर्वेदान्तिमतमत्तमतङ्गजमदमथनपञ्चाननाः पञ्चाननभक्ति-
सुधारसझरीपरीतहृदयहृदाः सदा चिदानन्दपरा वृषेन्द्रपुरःसरपुरातन-
चिराऽऽदृतपरायणचराः सरागमिदमवदन् ॥ ८४ ॥

असारसंसारपयोनिधेर्याः
कुल्याश्चतस्रोऽमृतपूरतुल्याः ।
भक्तिः शिवे सङ्गतिरार्यपङ्क्तिः
संवित्क्रिया शान्तिकृते निषेव्याः ॥ ८५ ॥

भक्तिः सत्पदवी-प्रसूर्जगति सा सूते हि सत्सङ्गतिं
सूते साऽक्षर-चित्क्रियां सपदि सा सूते च लिङ्गैकताम् ।
इत्थं भुक्ति-विमुक्तिसाधनतया सिद्धासु पञ्चस्वमू-
ष्वाद्या-भक्तिरिहाऽतुला किल समासाद्या नमद्या बुधैः ॥ ८६ ॥

त्यागः स भूषणमिलापति-वैभवानां
वेगस्तदादरिततुङ्गतुरङ्गमानाम् ।
नागस्तदङ्गणभुवः शिवभव्यभक्ते-
र्योगस्तदाऽत्र सुमता सुमतां जनानाम् ॥ ८७ ॥

भक्त्या श्रीगुरुलिङ्गजङ्गममहाऽऽमोदः समुत्पद्यते
भक्त्या दुर्लभचित्क्रियाऽतुलपथः सर्वाऽधिकः सिद्ध्यति ।
नित्यः श्रीबसवादिभिः सुचरिता कीर्तिः सुविद्या जयो
लक्ष्मीर्दानदयोदयो लसदयो भुक्तिर्विमुक्तिः परम् ॥ ८८ ॥

भक्तिस्तुष्टिं सरीसृष्टि । पुष्टिं च मनसो धियि ।
विनष्टि यम-दुर्भीतिं । विशिनष्टि महासुखम् ॥ ८९ ॥

वागद्वैतकुवादधीचपलदुर्वेदान्तिमोदागवि-
च्छेदव्यग्रकुठारिका शिवकृपा-सद्वृष्टि-कादम्बिनी ।
प्राज्यः श्रीशरणोत्कराऽऽचरित-संगोप्याऽध्व-सन्दर्शयन्-
मित्रश्रीर्भुवि भक्तिरीप्सितकरी भव्या निषेव्याऽखिलैः ॥ ९० ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



भक्त्यैवोत्तमधीशुचिः सुविनयो भक्त्या प्रदाने रति-
र्भक्त्यैवाऽतुलता-महाजपतपः-सिद्धि-प्रसिद्धिर्भुवि ।
भक्त्या श्रीप्रमथालिभिः सह सदा संसर्गकेलीसुखं
भक्तिः सारविचारकल्पलतिका दान्तिप्रशान्ति-प्रसूः ॥ ९१ ॥

अव्याजबान्धवदयालुगुरूत्तमश्री
सिद्धप्रसादमहिताऽञ्जनभव्यदृष्ट्या ।
लब्धः सुभक्तिनिधिरेष तु येन तस्या
किं दुर्लभं शिवकरेष्टसुखाऽनुभूत्याम् ॥ ९२ ॥

सद्भक्तिमञ्जुलवसन्तनवक्रियासं-
मृद्धे सुवर्तनवने सुमनो-मनोज्ञे ।
सत्पक्षिसञ्चयसमीहितदानशौण्डे
दारिद्यमत्र किमपारफलव्रजाऽऽप्तौ ॥ ९३ ॥

भक्ती राजरसालसालसुवनी सम्यग्विपत्रा भृशं
संशुम्भत्सुमनो-मनोहरकला सद्वासना-शालिनी ।
सत्यं सेव्यरसा त्वसाधुपथसंभ्रान्ताऽध्वग-क्लन्तिघा
ह्येतस्यां विहरेतरेषु तु मनः-कीर ! प्रचारं जहि ॥ ९४ ॥

याऽसाध्यं तनुते सुसाध्यमिह याऽलभ्यं च लभ्यं तथा
याऽभाव्यं भवितव्यमाशु, गरलं पीयूषमेव क्षणात् ।
तां भक्तिं सुमते ! समाश्रय समानाभावसौख्याऽऽप्तये
वागद्वैतपरादिमान्यमतदुर्वादाऽनुमोदं जहि ॥ ९५ ॥

भक्त्यैवाऽक्षि-समुद्भवो गणपदं श्रीकण्णपार्यस्य स-
च्चौडार्यस्य तृणं यतिः किल शिवप्रस्थं सुमल्लप्रभोः ।
स्वर्णं मोळिगिमारयार्यसुविभोः काष्टादिदास्यश्चरा
मुक्ता धान्यततिर्वृषेन्द्रसुदृशा भक्तिर्विमुक्तेर्घना: ॥ ९६ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


तदन्य-मोहं प्रविहाय नित्यं
भक्तिः किलैका भुवि साधितव्या ।
वृषेन्द्र-मुख्यार्य-गणार्ऽजिता सा
भुक्त्यै विमुक्त्यै च सदा सुधीभिः ॥ ९७ ॥

इत्युरुतर प्रतिभारुचिरकविप्रतानविबुधवितानमहिततानर्घ्यं सदार्यजनसरससमुल्लाससल्लापलीलारससमुल्लोलकल्लोलिनीनिमज्ज – नोन्मज्जनपरवशे सदसि समुद्वाह-सुवेलाऽतिक्रमो भवेदिति धवेलित– जनाऽऽकुलसुवासिनीसमुदयसमोदसमारचितसमयसमुचितसकलमङ्गल – वस्तुसामग्रीसंग्रहणसम्भ्रमं समालोक्य सुकुतुक सवेगं समुज्जृम्भद्रोहो निरोधक्रमङ्गलतूर्यघोषं समाकर्ण्य रागं सरससङ्गीतसङ्गलितसुधी- जनविरचिततुङ्गतरशिवशरणगणकीर्तनादिके सुवर्तमाने तदा सदा मुदा समयविदार्य–मतिमदालिनिवेदितमहितमन्त्रकलाकुलाकुलमलात्म – कमाहेश्वरसमारब्धमङ्गलमन्त्रसमुदये समुदञ्चिते वदनरुचिविधूनित- विधुं वधूं तां सद्भक्तिप्रसवां बसवलिङ्गाम्बां माङ्गल्याधिदेवताय- माना असमानाक्ष-भक्तमानिन्यो मङ्गल–स्नानार्थं आनयामासुः ॥९८॥

वामा वामकराऽऽत्तपात्रविगलत्पाथः करे दक्षिणे
न्यस्याऽस्याश्चिकुरेऽक्षिपत् किल यदा काचित्सुरोचिष्मति ।
तत्पार्णि किल दक्षिणं न विदुरारङ्गत्सुभृङ्गावली
संस्यन्दन् मकरन्दपूरविकिरत्पंकेरुहं के विदा ॥ ९९ ।

सुमङ्गलस्नानमरं पुरन्ध्रयः
संकारयामासुरमुं सुमोदात् ।
सद्भक्तिराज्ये च सदास्पदाढ्ये
तदाऽभिषिक्तेव बभौ शुभाऽङ्गी ॥ १०० ॥

काचित् करद्वयतलेन कनत्कचौघं
संपीड्य साधु निबबन्ध शयद्वयं तत् ।
कान्ताहितान्धतमसोभ्रमसन्निरोधं
कर्तुं निग्रन्त्रणकराब्जयुगीव रेजं ॥ १०१ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


काचिल्यावण्य(सत्वाद्)विहरणतलतद्देयगेहेन्दुकान्त–
प्राकाराकारगारद्युतिमृदुतरभव्याऽन्तरीयेण काचित् ।
तस्मिन् विन्यस्तसन्मङ्गलकलशयुगाऽऽच्छाद्यवासोविराज
च्चोलेनाऽलंचकारोदयसमयकनत्कञ्जजिन्मञ्जुलाक्षीम् ॥ १०२ ॥

ततश्च लिङ्गाऽर्चनमाहिताया–
स्तन्मङ्गलांऽग्या वदनं तदानीम् ।
सुधा–सुलिप्तैन्दवबिम्बवत्यं
रराज भास्वद्रुचि भस्मशोभि ॥ १०३ ॥

ततः सद्धर्मसरण्यः सुगुणसस्यधरण्यस्तरुण्यस्तास्तस्याः सरोज–दृशः शिरोजनिचयं याधूय, तत्रत्य-नीलिमां म्रेडयितुमिव सुरभिधूपधूमैः सामोदममोदयित्वा वेणीमारचय्य, मधुकरनिकरैः संग्राह्य स्वमध्यदेश–निवेशितरक्तसरोजमरन्दकम्भसरागपरागपुञ्जमिव मञ्जुलसीमन्ते रञ्जितसिक्तसिन्धूर[1]क्षोदमापूर्य नभोमण्डलव्यालीढतारानिचयवद्रु–चिरतरकेशाऽलङ्कारविचि किलमुकुलनिकरनिचोलितमुक्तावलयमालां शिरसि कनत्कपोलमुकुरप्रान्तप्रत्युप्तरत्ननिकरवत्सुकरमणिमयताटङ्क–युगं श्रवणयोः स्यन्दन्मरन्दसुन्दरतराऽरविन्दयुगलप्रान्तनिभृतविश्रान्त–मधुव्रतश्रेणीवन्मञ्जुलतराऽञ्जनरेखां गलत्प्रमदाऽऽशु ललन्नयनाञ्चल–युगे राजद्राजःस्नेहात् समागत्य सुकविवद् भासा रचितचम्पकपरीहा–सायां नासायां च व्यक्तमुक्तामणि सौन्दर्यरससागरप्रेङ्खच्छङ्खपरि–वेष्टितप्रवालमणिप्रसरवत् सुसरं कण्ठोपकण्ठे तरलतरकल्पलतादाढ्यं–कृते कनत्कनकबन्धनपट्टिकायितरङ्गदङ्गदयुगं भुजयोः प्रेमतस्तामरस–वृन्तप्रान्ताक्रान्ततरुणाऽरुणकिरणावरणवद्विलसितमणिवलयद्वयं कर–युगे हेमाचलयुगलसीमा समूर्ध्वप्रसृतत्वंगद्गङ्गाप्रवाहायितप्रालम्बि–मौक्तिकमालां घनस्तनयुगलसीम्नि रोहणाचलनितम्बप्रावृतमणिपुञ्ज–

---

1 क्षोरमापूर्य 'घ' पुस्तके ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

वद् रञ्जितरत्नमेखलां नितम्बे राजीवमूलमाश्रित्य कूजद्राजद्राज-हंसमिथुनायितमञ्जुसिञ्जन्मञ्जीरद्वयं चरणयुगे विन्यस्य चैवं शैव-समयभूषामेषां योषामणिं भूषाचयैरलचक्रुः ॥ १०४ ॥

वसन्तलक्ष्म्या निहितैः प्रवालैः
पुष्पैः फलैः संविलसद्वनीव ।
प्रसादिताशोभिविभूषणैः सा
प्रसक्तभक्तप्रमदाप्रतत्या ॥ १०५ ॥

अलंकृता राजितराजवक्त्रा
किमङ्गभूषा हि विभूषणानि ।
किं वा तदीयाऽवयवा विभूषा
विभूषणानामिव मङ्गलाङ्गी ॥ १०६ ॥

नभस्फुरत्केशनवोढुमौक्तिका
सुधामयूखायितमञ्जुलाऽऽननाम् ।
हिमांशुरोचिर्ललिताऽमलाऽम्बरा
बभौ तदा पार्वणशर्वरीव सा ॥ १०७ ॥

ततस्तां वधूं विधूतसंसभक्तप्रकरवरं परं चिरन्तननिरन्तरस्फुरद्-वीरशैवसमयसदाचारराज्याऽभिषिक्तमिव निर्वर्तितमङ्गलस्नान सा-नन्दं साऽङ्गं सभक्तिसमाहितलिङ्गाऽर्चनं चञ्चच्चन्द्रिकावरणशुभ्रां-शुबिम्बवद्विभ्राजितसितभसितलसितवदनं जितमदनं गुणसदनं विल-सदनन्तरुचिरदनरदनच्छदनव्यकान्तिद्वयी पाटलतरगुरुचरवरनिकर-चरणाऽरविन्दवन्दनाऽऽनन्दस्यन्दद्बाष्पपूरैः पादाऽभिषेकमाचरन्तमिव गोचरन्तं च पूर्वमेव षट्सम्मार्जनी-रङ्गवल्यादिपरिष्कृतमङ्गलवेदि-काग्राऽऽस्तीर्यमाणतण्डुलोर्ध्वदेशविन्यस्तसकलप्रपञ्चहेतुपञ्चभूतसमुत्प-त्तिकारणपञ्चप्रणमप्रतिष्ठापितनिखिलजगदादिबीजपरशिवपञ्चलपन-समुद्भूतपञ्चाचार्यपञ्चकलशानां सताम्बूलं सपूगीफलं सखर्जूरं

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



सयोग्यदक्षिणं सनारिकेलं च विधिवदभ्यर्चितानामभ्यर्णं तौ मङ्गलासन उपवेशयित्वा, तदनु सदनुग्रहं सकलजगदादिदेशिकैस्तैः पञ्चाचार्यैः स्वकलशपवित्रपाथःप्रोक्षणे तदुपरि परिक्रियमाणे तदा सदा चिदाऽऽस्पदाऽन्तरङ्गरङ्गन्मान्त्रिकमाहेश्वरे विधिवद् विवाहविधिं विधातुं समङ्गल-मन्त्रं समञ्जसं सम गणैः समारभमाणे तदा तयोरुभयोः सुप्रभयोर्घनशुभयोगमहितकान्तिरजनि परिहसितरजनीमुखसुजनिष्यज्-ज्योत्स्नानीरजनि रिपुद्युतिः ॥१०८॥

सर्वत्रैव मताऽन्तरस्थमिथुनस्याऽपि प्रभामुत्तमां
सूते लग्नविधौ तदा तु शिवयोः सान्निध्ययोगो महान् ।
साक्षादेव तदंशसम्भवलसद्भक्ताकृतिद्वंन्द्वसत्-
कान्तिः काऽपि किमुच्यते सकलदृग् जातः प्रशातः प्रसूः ॥ १०९ ॥

ततस्तेन मान्त्रिकमाहेश्वरेण कङ्कणबन्धनादिदशकर्माणि स-मनुः सुमनोहरं विधिवद् विधाय, विवाहविधौ यथाक्रमं समापिते पिता पितादृग्वद्वा विध्वसितलोभगुणो गुणनिधिः स तु सदीश्वरार्यः शिव-गणसमाराधननानाविधमानातिगदानातिगं करडीशशिरश्चालनचातु-र्याऽभ्यसनप्रथमदेशिकायमानमकरोत् कृतिनिकरोत्सव-सुकरोत्सुकः ॥ ११० ॥

तदनु, तदनुरागं स करडीश्वरोऽपि त्विदं तदवनीतले घनं घनं त्वित्यनन्तभूजन-स्तुति-स्वनादंबराऽऽलम्बनाऽऽढ्याम्बराऽवकाशो-च्चरिततत्सत्यताप्रतिश्वानुवचनवत्प्रसरितप्रतिनिजगुणं निजगुणाव-लिसमुन्नतिसमुचितं समाकलितबान्धवभक्तमाहेश्वरसमूहसमाराधन-पुरःसरं परिस्फुरद्धनकनकनवांऽशुकाऽलङ्कारप्रमुखसुवस्तुप्रतानाऽवनी-तलवनीपकजनावलिमनीषिताऽधिकाऽधिकप्रदानजनिष्यत्तोषाऽमृतपूरै-स्तेषां मनांसि प्रावृषेण्यकादम्बिनीकदम्बस्सदम्बुधारासारैर्नदनदीकुल्या-वापीकूपतडागसरांसीव भृशमपूरयत् सुपावनस्त्वपारसत्कृपानिधिः सुपार्वणक्षपाकरयशाः ॥ १११ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


सदा वदान्यत्ववदाढ्यतातिसं-
पदास्पदं सोऽर्थमदान् मुदायताम् ।
तदा तरुर्गोमणिरामरः किमि-
त्युदाहरन् सः प्रमदा–सदालयः ॥ ११२ ॥

स तदनु करडीशः सर्वसंघैः समेतः
ससदयिततनूजः साच्छविद्याविवेकः ।
सदनुभव इवाऽसौ तूर्यघोषाऽनुघृष्यत्
सकलदिगवकाशः स्वां पुरीं संजगाम ॥ ११३ ॥

साकं तया दयितयाऽन्वितया स्वभक्त्या
राका सुधांशुलसदाननया नयाऽङ्कः ।
स्तोकान्यतोषशरधिर्नवसत्कुमार–
श्रीकण्ठदर्शनशुभाऽम्बुधिपार्वणेन्दुः ॥ ११४ ॥

सुतेन तेन स्नुषया तया । स करडीश्वरः ।
सालम्बः ससुखं तस्थौ । चराऽर्चनमहा–महे ॥ ११५ ॥

नीतोपायनवाऽग्रमामुखसुरे कान्तानतासेन्दुसं–
स्फीतद्योतहसन्नवांऽघ्रिनखरुग्व्यूहा विवाहेऽद्रिजा ।
कें तां कीर्तितुमीश्वरा ह्यु पयमीकामाऽन्तकः कामुकी
भूतोऽर्धाङ्गमदान्मुदा दिशतु श साऽम्बा कदम्बालया ॥ ११६ ॥

इति श्रीविनमदमरवरनिकरमौलिमणिप्रभापटलपाटलपरशिवपदार–
विन्दस्यन्ददमन्दकृपारसमरन्दझरीपरितृप्तिमदुरेन्दिन्दिरायमान–
मानससरसकविताकुतुकाकलितपर्वतसुधीविरचिते
करडीशचरितामृतचम्पूप्रबन्धे चतुर्थः स्तबकः ॥



॥ श्रीरस्तु, श्रीरस्तु, श्रीरस्तु ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

।। शम्भो ! प्रसीद ।।

# पंचमः स्तबकः

वन्ददानन्ददं वन्दे । निन्ददिन्दुशतप्रभम् ।
स्कन्ददन्तिमुखोमाऽङ्कं । बिन्ददं हो भवं शिवम् ।। १ ।।

अथ निजरमणीमणी गुणं स्वं
स खलु नियोजसुवृत्तशाणघर्षात् ।
जनितरुचिचये विनीय साध्वी
निचयशिरोमणितां सुखी कुमारः ।। २ ।।

संरूढोभयपत्रपत्रिण इव सोड्डीनकेलीरते–
रुद्यद्योग्यसुतस्नुषा समुदिताऽऽनन्दोल्लसच्चेतनः ।
नित्यं स्वायतजीवनायुतचरश्रेणीसमर्च्याविधौ
तस्य श्रीकरडाश्वरस्य तु मनाक्क्लेशो न लेशोऽभवत् ।। ३ ।।

ततः कृताऽनुज्ञा शिवेन बसवाख्यकरडीशस्य भार्या, गङ्गाम्बिका, मरिबसवार्य–जननी निजपति–सुत–स्नुषानितरसाधारण भक्तिमहिमां हिमांशुकलाकलापसदसि सकुतुकं कथयितुमिवाऽथवा सुवाणीमेनां स्वसन्निधिमानीय, सरलसल्लापलीलारससमास्वादसमुदित-सुखमनुभवितुकामया स्वभामया त्रिजगन्मात्रा गोत्राऽधिपदुहित्रा साभिलाषं प्रार्थ्यते; नतेन भर्गेण प्रमथैराकारितेव सरसपावनगुणतरंगा गङ्गा शरधिमिव निरन्तरं श्रीसङ्गतिमङ्गलाऽऽवासं कैलासमगादगाध-हृदया ।। ४ ।।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

ततः कृती श्रीकरडीश्वरोऽसौ
विना गृहिण्या चरभक्तिरेषा ।
न मञ्जुला स्यादिति मन्यमानः
समं समालोच्य समं जनैः स्वैः ॥ ५ ॥

उपयेमे ह्युपमायास्त्वपगतवसतिं स्वपावनैश्चरितैः ।
नीलाम्बिकां सुलीलामालामालीनकान्तिमनुकूलाम् ॥ ६ ॥

नीलाम्बा स इव नीलाम्बा ऋषभार्याऽनुमोदिनी ।
कल्याणपूराहितालंकाराऽञ्चितकलेवरा ॥ ७ ॥

सत्यालयाऽच्छरसना भुवि भारतीश्री-
र्नित्यादरा सरससारसभावनेत्रे ।
स्तुत्याऽनिशं शिवपदे हृदये भवानी
तत्याज सुस्थितिरिति (स्वय)मानताऽग्याः ॥ ८ ॥

यदा नतं साधुगुरौ चरौघे
सदा धवे सन्नयरङ्गमङ्गम् ।
तदा नतां गीतिमुदा कवीन्द्रै-
रुदाहृतं वाक्यमिदं कृतार्थम् ॥ ९ ॥

भक्तिः शिवगणसेवाऽऽसक्तिः सत्कर्मघटकसद्युक्तिः ।
रक्तिः सुगुणचये मृदु सूक्तिः सम्भूय तत्र ता नियताः ॥ १० ॥

कलकलिकाललदलिकाऽञ्चल-चलदलकालिसुललिताऽऽस्याब्जा ।
वलिवलितमध्यमाभाकुलकुलकन्याशिरोमणिः सेयम् ॥ ११ ॥

करणत्रयकलितनयां करुणाऽपाङ्गां कलावलीढाङ्गीम् ।
कान्तां समानुगां भुवि पञ्चककारां सतीं कृती लभते ॥ १२ ॥

कालकालालकालीकलिकालोककुलाकुला ।
कालकाललललीलालोलाकूल-कला किल (अयं द्व्यक्षर-श्लोकः)
॥ १३ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



[1]द्रक्ष्यं[1] जातुमनागिनैकवदनं श्राव्यं तदीयं वचो ।
घ्रातव्यः सुरभिस्तदर्चनविधौ घूमोक्तघूमोदितः ।
स्वाद्यस्तद्दयितप्रसादसुरसः स्पृश्यं तदांघ्रि-द्वयं
नित्यं स्तुत्यतरं त्वयं किल सती पञ्चेन्द्रियाञ्चत्क्रमः ॥ १४ ॥

नीलाम्विकार्यरागास्यात् । तुङ्गद्गङ्गालसद्धिया ।
नीलालकाभिरामास्या । रङ्त्तुङ्गातिसन्नया (अयं गोमूत्रिका-बन्धः)
॥ १५ ॥

एतादृशात्मसुदृशा सदृशागुणौघैः
स्यातांबुधिःसमभवत् करडीश्वरोऽसौ ।
जाताऽऽदरो हि सुतरां चरतर्पणे नि--
र्यातश्रमःस्वपथपान्थसुत-स्नुषाभ्याम् ॥ १६ ॥

तदनु, शरदारम्भसंरम्भसमाहूताः सत्पथसञ्चारसमुदञ्चित-शुचयः सुकलितसद्गतिप्रशंसा द्विजकुलोत्तंसा हंसा इव वसन्तलक्ष्मी-समुज्जृम्भसुवासनासुमनःफलनिकरसुकरवनीमभिपतत्पतत्रिण इव सम-यविकचाऽरविन्दवृन्दस्यन्ददमन्दमरन्दझरीसमामोदमेदुरमरुदाकारित-मधुव्रता इव सकुटुम्ब-करडीशभक्तिकामिनीप्रेरितकीर्तिदूतिकासमा-हूताः सुदृग्जनकामिनः सरसगुणप्रेमिणः प्रभुजङ्गमस्वामिनः परस्पर-शिवानुभवक्रेलीरसपानपारवश्याः समुपगतमार्गक्लेशा गलिताऽऽशा अपि सकलाऽऽशाभ्यः शिष्यैः समैः समं सभां संमाजग्मुः ॥ १७ ॥

करडीश्वरेन्दुविसृमरभक्तिसुधाविमलचन्द्रिका-लुब्धा ।
दिशि दिशि चरदुरुचरवरचकोरनिकरा विरेजुरभिगम्य ॥ १८ ॥

वैराग्यप्रतिपन्न-चन्नबसवस्वामी प्रकामी चिद-
स्तेजोराजिविराजितोद्गरिपुरप्रान्तो महान्तप्रभुः ।
कल्याणोपपदो लसद्बसवलिङ्गार्यो निवार्योत्सव-
स्तुङ्गं तुङ्गतटोकुटीरवसतीश्रीशान्तवीरेश्वरः ॥ १९ ॥

---

[1] द्यक्ष्यं 'ब' पुस्तके ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


शान्तत्वादिन्द्रियोद्रेके । वीरत्वादघसंहृतौ ।
यः शान्तवीरस्वामीत्य । न्वर्थोऽन्यार्थोपपादकः ॥ २० ॥

तुङ्गाऽम्भःस्नानपानाद्यमलमथिलषन्कर्मगङ्गोत्तमाऽङ्गो
लिङ्गाऽङ्गैक्याऽध्वमूलप्रकटनमनसा जङ्गमाऽऽकारभाजी ।
गङ्गाद्युन्मुच्य सर्वोत्तमगुणगणता प्राप्ततुङ्गाऽभिधा सं-
रङ्गद्धुन्यन्तरुर्वीतलमवतरितः शान्तवीरप्रभुः सः ॥ २१ ॥

श्रीकोप्पळाख्यपुरभव्यमहामहोद्यन्
माकन्दमञ्जुवनरञ्जितकोकिलार्यः ।
ईशार्चकावलिमनोरमसच्चरित्रः
काशीन्द्रनामविलसद् घनसच्चरेन्द्रः ॥ २२ ॥

गुरुसिद्धमहास्वामी । शिवलिङ्गप्रभुस्तथा ।
स्वच्छा हुच्चोडियार्य श्री । मुग्धसङ्गार्यसन्निभः ॥ २३ ॥

सण्डूरुपूर-मण्डनसच्चरित्रा-
द्दण्डः प्रभुस्वामिसुनामवाच्यः ।
पिण्डादिमोद्यत्स्थलपूतविद्या-
खण्डात्मकज्ञाननिधिर्यतीन्द्रः ॥ २४ ॥

परिलसदुरगाद्रिप्राज्यपूरन्तराल-
स्फुरदुरुमठवासः सच्चरेन्द्रावलीन्दुः ।
करिवृषयतिराड्द्राङ् मौलिरत्नार्कभाभा-
सुरपदकमलो निष्काममायाप्रपञ्चः ॥ २५ ॥

अन्येऽपि च महच्छद- । वाच्याः प्राच्यादिदिक्तटात् ।
मतोत्कर्षमहादीक्षा- । बद्धाः शुद्धाऽध्व-बोधकाः ॥ २६ ॥

एतन्मुख्यगणा गणेन्द्रभवनादागत्य भागं भुवो
भक्तिज्ञानविरागयोगकलितस्वान्ताः प्रशान्ता अपि ।
नित्यं श्रीकरडीशभक्तिवनिता भोगानुरागाशया
रेजे राजित-तद्गृहाऽमलसरत्खेलन्मराला इव ॥ २७ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



नित्यं स हस्ताधिकजङ्गमाऽर्चा
कृत्यं प्रसङ्गे युततोऽधिकं वा ।
तन्वन्तमित्थं करडीशमत्राऽऽ-
तन्वन्तमुच्चैर्विनयान्नकः सन् ॥ २८ ॥

नन्दीशः करडीशस्तद्दयिता केवलं हि तद्दयिता ।
तत्तनयस्तत्तनयः सनयोऽनयदीदृशं कार्यम् ॥ २९ ॥

नीलाम्बिका चराऽर्चाऽऽशा- । भरिता चरिताऽनघा ।
वृत्या नाम्ना च शान्ता । वृषेन्द्रदयितायिता ॥ ३० ॥

मरिबसवसदाख्यामण्डितः पण्डितालीहृदभिलषितपूर्त्यै मर्त्यगामर्त्यशाखी ।
सततमतिविभास्वद्भूतभाव्याद्यकाल-
त्रितयविततवृत्तिस्तत्सुतः चित्सुखाढ्यः ॥ ३१ ॥

श्रीमद्वसवलिङ्गाऽम्बा । स्नुषा घनवृषात्मिका ।
नित्यं चराऽर्चनाऽऽसक्ति- । कलिता कलि-ताप-घा ॥ ३२ ॥

नित्यं स्तुत्यगणाऽर्चनाऽतुलसमारम्भातिशुम्भत्क्रिया
जृम्भत्सम्भ्रमसम्भृता बसवलिङ्गाऽम्बा विलम्बाऽऽतुरा- ।
मेतन्मे तदिदं सदा त्वितिकलं रुद्राद् गणेन्दाऽऽरवाद्
वर्षाब्दस्वनतोषितेव शिखिनी हर्षः प्रकर्षा बभौ ॥ ३३ ॥

करुणारसभरणाऽन्तःकरणसितकिरणभरणशरणोऽसौ ।
अरुडोशभक्तिरसघनसरिदीशः कोऽत्र भाति वर्णौघे ॥ ३४ ॥

कल्याणे मितजङ्गमाऽभिलषितं दत्तं पुरैकां विना
विद्यां तां किल दातुमद्य सकलैः साकं सनन्दीश्वरः ।
धृत्वा श्रीकरडीश-नाम समगाद्बल्लारि-नाम्नीं पुरीं
नो चेदीदृगपारभक्तिमहिमा त्वन्यं कुजन्यं व्रजेत् ॥ ३५ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


स्वागतेः कारणं कार्यं । कर्तुं स करडीश्वरः ।
तैः साकं चिन्तयामास । प्रागुक्तैश्चरपुङ्गवैः ॥ ३६ ॥

ग्रन्थाः सन्ति पुरातनैः समुदिताः पूर्वं हि शर्वाऽऽननो-
द्भूता वेदपुरःसराः शिवमताऽऽचाराऽध्व-साराऽर्थकाः ।
भान्त्यैवाऽत्र तथापि शम्भु-समयाऽऽचारः प्रचारः क्षितौ
निस्तेजस्त्वमगादगाधकलिदुश्चेष्टाविसृष्टात्वसौ ॥ ३७ ॥

एवं भावे कारणं सारविद्या
भावस्तावद् भाति नो हेतुरन्यः ।
विद्यावद्या सर्वतोऽखर्वतोषः
स्फूर्तिः कीर्तिः प्राज्य-तेजः प्रपूर्तिः ॥ ३८ ॥

नृत्यास्थानी सुभक्तेश्चिदमलनलिनी सत्सरःसद्विरक्ते-
र्हर्म्यस्थानं सुकर्माऽऽचरणसरणिसंक्लान्ति-विश्रान्तिगेहम् ।
शान्त्यादेः कान्तकेळीवनमभवकथासंश्रुतेर्जन्मभूमि-
र्हृद्या विद्याऽनवद्या विमलशिवपुरःसापर गोपुर हि ॥ ३९ ॥

विद्याविहीनघनपावनजङ्गमाना-
मन्ये भवन्ति हि गुणाः परिहासमूलम् ।
लोके यथा त्वगतवस्त्रलवस्य पुंसः
कान्ताङ्गरागकमनीयविभूषणानि ॥ ४० ॥

सुवर्णभूषाऽञ्चितजङ्गमार्याः
सुवर्णभूषाऽञ्चितरत्नभागाः ।
अवर्णलेशाननभाजनस्ते
त्ववर्णलेशाननपुत्रिका हि ॥ ४१ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



विद्या सन्मानसंद्यन्मणिसुकुरचिराऽऽरूढमालिन्यकर्षद्-
भूतिर्गोप्याऽर्थपूगप्रकटनपटुसत्कज्जलं सज्जलक्ष्यम् ।
भूषा-भाषावलीनां सुगुणततिलसद्वल्लरीकायमाना
भोगो योगोपयोगोऽमलचरितपयःस्यन्दिनी नन्दिनीयम् ॥ ४२ ॥

ददाति विद्येयमचञ्चलां श्रियं
यशः कलापं त्वकलङ्कमक्षयम् ।
कवित्वचिन्तामणिमीशसत्कृपा-
स्रजं विवेकाऽब्धिकहेयतः स्वयम् ॥ ४३ ॥

लतेव कल्पेष्टफलं सुवासनां
विधोः कलेवाऽमल-तेजसां चयम् ।
[1]सुधाऽब्धिवत्स्वादुतरान् गिरां झरां
धिनोति विद्येयमरं निरन्तरम् ॥ ४४ ॥

विद्यया किल विवेकसम्भव-
स्तेन साधु-चरितं च तेन हि ।
जायते शिवकृपा तयाऽऽगतिः
सद्गतेरिह निदानमप्यसौ ॥ ४५ ॥

अतः शिवमतोत्कर्ष- । वार्धिसंवर्धनक्षमम् ।
कलाराकेन्दुपकला- । प्रसारणमिह प्रियम् ॥ ४६ ॥

पूर्वमस्मन्मते सा तु । प्रचुरा सुचिरादिह ।
इदानीं कलि-माहात्म्याद् । गलिता चलिता शुभा ॥ ४७ ॥

इत्थं विचार्य मनसा घन-(सद्गुणाऽ)ङ्कः
कर्तुं कलासु चतुरान् सुतरां गणोघान् ।
शालां ततान वितताऽऽश्रित-ताप-हन्त्रीं
स श्रीशिवाध्व-चर-भासुर-भागधेयाम् ॥ ४८ ॥

---

1 मरुन्नदीवाऽच्छ 'ख' 'घ' पुस्तकयोरधिकः पाठः ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


एतत्पूतमत-स्थितान् गुणिगणानाहूय मोहेन सत्–
कृत्वैतद्गृहकृत्यभारमखिलं धृत्वा च दत्वा मुहुः ।
शास्त्रैकाऽभ्यसनाऽतुल-व्यसनिनोऽकार्षीत्प्रहर्षः कियान्
सोऽयं श्रीकरडीश्वरः किमु नरः शैलादिलीला परा ॥ ४९ ॥

एतत्पूतमतस्थितान् गुणिगणान् आहूय, सेयं करडीशकीर्ति–कान्ताजन्मशालायिताऽध्ययनशाला पुनर्विपुलवसन्तवनीव विविधवि–चारपरिरञ्जिता, सुललितलङ्का–स्थलीव सुवर्णभूश्रीसशोभिता, राका–रात्रिरिव राजत्कलानिधि–प्रभावा, सुविकसत्कमलवल्लरीव सूर्याऽऽ–गम-जनिताऽऽमोद-श्रीवसतिः, बालश्रेणीव बहुलाऽऽलाप–मण्डिता, विबुध-जनविलासपरिष्कृताऽपि विपुलभासुरश्रीः, कलित-गुरुप्रभावाऽपि कवि-चतुर-वाक्प्रचारा, कुवलयोल्लास-प्रसूरपि कुशजात-जातसूतप्रीतिः कमनीय-वाणी-विलास-भूमिरपि कलित-मा-विनोद-वसतिः बभावसौ शुभावह-प्रभाव-प्रभासुरा ॥ ५० ॥

रेजेऽजस्रमनेकपा परिलसत् पुन्नागरागाकुला
प्रोद्भूताऽऽगमवर्तिसद्द्विजमहीभृत्संघ-सम्मानिता ।
संशुम्भत्सुमनोविमोहितजगज्जाला विशालाऽतुला
शाला सा करिवत्करीन्द्रकरवत्कान्तारवत्कामवत् ॥ ५१ ॥

तर्काऽलङ्कार-पातञ्जलमुखनिखिलाऽनन्तशास्त्रप्रताना
प्रत्यूहाऽजस्रपाठप्रवचनपटुवाक्सच्चरेन्द्रालिघोषैः ।
दुर्वादिव्यग्रगर्वाकुलशिवसमयद्वेषिनिर्व्याकुलाञ्चन्–
निद्रा-मुद्रा-विनिद्रावणचणमभवत् कान्तविद्या निशान्तम् ॥ ५२ ॥

अनन्तपदसंक्रान्त– । मपि साऽन्त–पदाऽङ्कितम् ।
अनेकपत्रविलसद्– । विपत्रपुस्तकं बभौ ॥ ५३ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


तदानीं, सदा नीतिपरशिवाऽऽनन्दनिधिः कश्चिद्गङ्गाधराऽऽख्यः साऽनुरागं गङ्गामवतीर्णो गङ्गाधर इव सर्व-मङ्गलालिंगितवामाऽङ्गः कामं विजितकामः सदा सन्निहितवृषः सुनिर्मलप्रभावः कुवलयाऽऽप्त-शिखामणिश्चोत्तरदेशीयो देशिकोत्तमः शास्त्रमधीयान् सुगुणसमुदाय-समुदञ्चितसकलदिगावरण-करडीश-विततसिततरयशः पटकुटीपटीयः समारम्भाऽवष्टम्भस्तम्भायमानामध्ययनशालामध्यास्त ॥ ५४ ॥

गङ्गाधराऽभिधयतिः समभूत्सरस्वद्-
गङ्गाधरायितगभीरिमधीक्षमाऽङ्कः
गङ्गाधराऽर्चनभराऽतिपवित्रताभा
गङ्गाधराऽखिलसुनिर्मलवस्तुवर्गः ॥ ५५ ॥

लिङ्गाऽङ्गैक्य-कला-विलास-निपुणो लिङ्गैक-निष्ठा-परो
लिङ्ग-ध्यान-सुधा-निषिक्त-हृदयो लिङ्गाऽर्चनैकोत्सवः ।
लिङ्गाऽन्याऽखिल-देवताऽनभिमुखो लिङ्गप्रसादोदनो
लिङ्गाऽऽलिङ्गित-मङ्गलाऽङ्ग-महितो गङ्गाधराऽर्येश्वरः ॥ ५६ ॥

वीरमाहेश्वराऽऽचार- । सारासार-कलेवरः ।
घार-पाप-विकारादि- । वार-वारण-धीर-धीः ॥ ५७ ॥

परिकलित-सुशीलः पार्वतीकान्त-लोलः
(परम-धृत-दुकूलः पूज्य) चित्ताऽनुकूलः ।
परिगत-शिव-लीलः (प्राप्त-सौख्याऽऽलवालः)
(परशिव-जप मूलः प्रोक्त) पत्याश्च खेलः ॥ ५८ ॥

कलुष-मथन-धीरः (कात्स्न्यं-कर्तव्य-वीरः)
(करण-विजय-शूरः) कान्त-सत्योक्ति-सारः ।
कमल (निभ-शरीरः काव्य-सारोक्ति-पूरः)
(कलित-विजित--मारः) कष्टभिच्चित्प्रचारः ॥ ५९ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

सोऽयं कदा(चित् स्नान-समारा-) धनसमये शिवसमयासम-समयावहा(दिकं) प्रतिपाद्य, निःशेषं निजविमलकुण्डमण्डितं प्रका( भं) स्वहस्तसमाचरितप्रशस्तसमस्तसत्कर्मतया स्व(-कीयाध्य-)यन-शाला-ऽञ्चितबाला घनलीलाऽमलचेलायितबर्हिः सालाभ्य (आनुगुण्यं प्रब) लाऽनुकूलं करडीशभक्तिसुधारससङ्कलनकलितमधुरिमाऽतिशयसुनिर्म-लाऽऽपं कूपमेत्य, कुण्डं रश्मिनाऽवबध्य, कूपाऽन्तर्विमुच्य, सदाचार-जीवनं जीवनमापूर्य, पामरकर-कमल-पीठाऽधिष्ठित-लिङ्ग एवोर्ध्वं तत्कुण्डसमाकर्षणसमये करतल-च्युतो लिङ्गमूर्तिः शम्भु-सुभक्ति-शुम्भत्करडीश-महिमाऽतिशयं प्रकटयितुकाम इव कामं सीमाऽतिग-कालाऽनलवत्फालाम्बक-ज्वाला-माला-व्यालीढ-तनुतया शीतल-कर-डीश-शान्तिरस-निरन्तर-सङ्गम-सङ्गताऽतिशैत्यकूपगतांदिमवगाह्य तापमपनेतुमनाः सनातनी-स्वशीर्षधुनिगत इव तत्कूप-सलिल-गत-माधुर्य-नैर्मल्य-तुषारता-तारतम्य-परीक्षा-कुतूहलेनेव भक्तानां भुक्ति-मुक्ति--प्रमुख-प्रकृष्टफल-प्रतान-प्रदान-निरातङ्कशक्ति--सिषाधयिषया भूमावेतत्काममभीष्टपूरककूपे जल-स्तम्भं समाचरितुमिव पुरा शरण-वृन्दे त्वमन्द-महिम-चन्दविभोर्लिङ्गं हृद इव स प्रभुर्मुनिजनमनसीव घनशीतल-कूपजले ममज्जनमज्जनसुरागः ॥ ६० ॥

आर्यां गङ्गात्यमर्षं नयनयुगगतं मत्सरं मूर्धभूषा
ग्रीवाहाराऽतिवैरं करकलितमृगं चाऽन्तरीयाऽत्रसन्तम् ।
कृष्टं वीक्ष्योत्तरीयं कृतरभसवधूवाहनं वीक्ष्य खेदात्
स्वीय-व्यत्यासपूर्त्यां प्रथिमविशदिवाऽनङ्गलिङ्ग(स्व)रूपी ॥ ६१ ॥

ततश्च, वितत-व्यथा-सङ्ग-हृदयो गङ्गाधरार्योऽन्तरङ्गे चिन्ता-मित्थं ततान कृताऽनघः ॥ ६२ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


किं चाऽऽसीत् किं करोमि प्रचुरतरशुचं हन्त कस्मै ब्रुवेऽहं
शम्भो ! किं भो सदम्भोरुहचयतरणे ते दयाक्षप्रयाता ।
त्यक्त्वा मां गन्तुमिच्छा भवदभवकुतकः कृतो मन्तुरद्य
व्यक्तं भक्तः प्रियत्वं त्वगतमुरुतरं कं श्रयामि क्व यामि ॥ ६३ ॥

भुक्तं न क्वचनाऽपवित्रमशनं स्वाऽऽचार-शून्याऽऽलये
त्यक्तं नैव गुरूपदिष्टममलं गर्वाऽन्धदुर्मेदसा ।
नोक्तं दुर्वचनं कदाचन सदाचाराऽऽवगाऽग्रे च नो
मुक्तं वीक्ष्य चरं हि वन्दन(-परो दुःख) न जाने त्विदम् ॥ ६४ ॥

नैवाऽऽलोकि कदाऽपि सुन्दर-दृशां रूपं प्रियं त(न्मुखं)
(नैवाऽऽघ्रातमहो सकाममधुना तद्) घ्राणदूरादपि ।
नैत्राऽस्पर्शिपदात(दा)सनम(तो नैवाऽत्र दूरीकृतः)
(नैवोक्तं च य) दायविभ्रमलवंऽप्येनो हि केनोदितम् ॥ ६५ ॥

(किं कारणं चाऽत्र मयाऽद्य दृष्टम्)
(सम्भा) विचाभाव्यमनोऽभिलाषः ।
ना(स्त्यत्र) चाकार्यं (मतिः कृता वै)
(ह्याचार-हीनत्व-कृतिः) कुतोऽसौ ॥ ६६ ॥

क्षान्तं दान्त (सञ्च)लनान्तं (सद्धर्म-सहित-सम्पत्तिम्) ।
भ्रान्तं शान्त विषयेऽत्यन्तं (संस्थापन-मतमित्युक्तम्) ॥ ६७ ॥

जशिवागमोत्थसुविचाराऽमर्त्य (शरणसत्कृतियुक्तोऽद्य ।
भसिताऽलङ्कार-सहित- फालः, किं वा व्यत्यस्त-तत्-क्रियायुतः ॥६८॥

(किं वा सद्गुण-संग्रहे व्यतिकरोऽप्यद्यैव सम्भावितः)
(किं वा दर्शन-हीन-का) रणविधिन्यासादिनासादितः ।
किं वा नाम (जपोक्ति-कर्मणि कदाप्रा) णप्रमाणाऽञ्चितः
किं वात्रोधि न चक्रसुस्थितिरि (ह व्यत्यस्त-भावाऽऽकृतिः) ॥ ६९ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


इति विलपति किल पति–वियुक्त–कान्तावच्चिन्तासन्तानतान्त-स्वान्ततच्चरवरे, तत्रत्या सपदि वित्रस्ता सुचिरमित्रत्वभाजः स्वैक्ष्य सब्रह्मचारि सतीर्थ्यप्रमुखाः शिवगणाः सम्भूय तं भूयसा सान्त्व-वचः-समुदयेन निरुध्य, प्राणोत्क्रमणाय त्वरमाणं किरमाण–व्यथा–परिमाण-शुचं किमत्र करणीयमिति तरुणाऽमृत–किरणाऽमल–भरणाऽतुल–चरणा-ऽम्बुज-करुणा–रस–शरणं स एव शरणः शरणमिति निर्धार्य, चित्तान्त-र्वृत्तान्तमेनं सरभसं करडीशाय साऽभिलाषं प्रेषयामासुः ॥ ७० ॥

ससम्भ्रमं समागत्य । सवेपथु-कराङ्घ्रिकः ।
सदनं करडीशस्य । समागात् किल कश्चन ॥ ७१ ॥

तत्राऽन्तरे,
स त्राणभाग् विपदपाकरणेषु सत्या
सत्राऽऽस्थितः शिवगणाऽर्चनमारचय्य ।
स त्रास–मध्य–हृदयं तु कृतः प्रिये मे
सत्राऽरिरत्र शरणं त्विति सम्बभाषे ॥ ७२ ॥

तदाऽगतः कश्चिदुदाजहार सं–
मदाऽपहं तीक्ष्ण–मुदं त्वमग्रतः ।
सदार्यसंघोल्लसदायतोक्ति शं
सदाऽऽगमाऽऽचार–सदाश्रयात्मनः ॥ ७३ ॥

तथाविधं कर्ण-कुहरकीर्ण-दहन–वर्ण-निचयमुदन्तमाकर्ण्य, विदीर्ण-हृदयः "किमिदमापतितम्" इति चिन्ता-परतन्त्रोऽपि व्यक्तं विपदि भक्तरक्षायां दीक्षाबद्धः साक्षाद् दाक्षायणी-पतिरेव गतिरिति धृतिदत्त-हस्तोत्साहः सत्वरमुत्थाय, तत्साधन-सामग्रीसहितः परिवृतानेक परिजन-पुरजन , स रजनिसमये शिवसमयवनवसन्त (इव सर्वाऽऽनन्दकरः सम्प्राप्त–) जालाऽञ्चित–सकल–शास्त्रमालाभ(ज)नानु(कूलः साम्प्रत-) मुत्पत्तिसमुचितेलां निजकीर्ति-(ज्योतिषा प्रकाशयन् महत्-) तराऽध्य–

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



यनशील-(विद्याऽर्जनाऽऽसक्त-विद्यार्थिवृन्दः, परमेष्टलिङ्ग-) विरह-परिताप-पुष्यत् (तत्चरवर श्रीगङ्गाधर-सहाय्यार्थम्) अञ्चच्चन्द्रिकासुधारसाऽभिषेचनपूर्ण (चन्द्र-सहित-) सायंसमय इव गलित-सकल (ध्वान्तः, समुत्-) पादकसुरुचिरसुरभिरिव चिरमुमा(-पति-ध्यानाऽऽसक्तः) स जात-करुणाया किल दावानल-दाहाऽतुलशान्तिकरजलदागम-इव वियुक्तलोकबान्धव-विलोकनाशाकुलितस्य कोकस्य ततुपरमहंस-निरूपक-प्रत्युषः-काल इव स्थलान्तर-चलत्क्षितिविलान्तर्निक्षिप्त-द्रविणभाण्ड-व्यसनाऽऽकुलस्य निधिप्रदर्शकाञ्जनसिद्धिसाधकप्रवीण-मान्त्रिक इव सरभसमुपागादप्राकृत-कृपापहा कृपालसदपाङ्गः ॥ ७४ ॥

दर्दर्श तं तत्र तदा चरेश्वरं
कदाचिदुत्तीर्य नदीं गतां गवीं ।
स्वमातरं तामनवेक्ष्य ततुतट
क्षमाचरं वत्समिदार्तं-वत्सलः ॥ ७५ ॥

चरः स बाष्पाऽऽविलपक्षपंक्ति-
र्विलोक्य वक्त्रं करडीश्वरस्य ।
प्रक्षोभयामास गभीरमस्य
स्वान्तं हि मन्दाद्रिरिवाऽम्बुराशिम् ॥ ७६ ॥

आदर्शमाहुः किल साधु चित्तं
सुबोधभूतिच्छुरिताऽमलाऽऽभम् ।
तदेव संक्रामति तत्र नित्यं
खेदः प्रमोदश्च परं परेषाम् ॥ ७७ ॥

लोकें मनः सुमसां कुसुमं मृदुत्वाद्
यत् कोविदा जगदिरे तदलीकमेव ।
आद्यं परागतलसङ्गततापतः सं-
ग्लानिं स वेत्ति न तथा चरमं कदाऽपि ॥ ७८ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



ततः, कष्ट-दशाऽऽश्लिष्टहृदं शिष्टवरः क्लिष्टमनाः करडीशः समाचष्टेः– ॥ ७९ ॥

"चरार्य ! मा ताम्य पराप्तरोऽति-
स्तराऽपरौधार्तिनिरासदक्षः ।
धरातले भक्ति-परात्मनां सु-
स्थिराऽऽदरोऽत्राऽस्ति स राजमौलिः" ॥ ८० ॥

इत्थ निगद्योज्ज्वल(सूक्ति)काभि-
र्निष्कासयामास तमिस्रमुच्चैः ।
कलाकु(लीन-क्रियया प्रसिद्धम्)
(श्रीमत्प) टुस्वान्ततलीतमोऽवत् ॥ ८१ ॥

(परोपकारी करडीश्वरोऽसौ)
(सद्धर्म-) भानोज्ज्वलसत्प्रभा(वान्) ।
नितान्त (दीपोत्सव-सम्प्रकाशात्)
(रात्रिं च सम्य) ग्दिवसं चकार ॥ ८२ ॥

(इत्थं प्रयत्नशीलः सः संसारव्यापि प्रगा–) ढतमान्धसे स्थिरतर–निजतेज (–साऽपि प्रकाशनाद्युक्तः सन् स-)र्वाऽधिकशर्वाऽमलमतद्वेषिदुर्वार(–मज्ञानं निवारयितुमिव स्वजन-सम्म-)ते निगूढतरार्थप्रतिपत्ति-प्रभवप्रतिभास्फु (रणतया सदाचार–मूल्यां–)कनसाधनप्रकाश विकासे चकासति, सलिलाऽऽकर्षकयन्त्रेण कुम्भसम्भवोऽम्भो-राशिमिव तोय-निक्षेपं कूप निरापं नितरां विधाय, बहुविधायत-प्रयत्नः करडीशः स निजवंशनामपदाऽपरवाच्यचयावृतिस्फटिकप्रस्तरवत् सुनिर्मलाऽधः-स्थले नियमिताऽन्तःकरण-शिवशरणगण-सदाचार-सरणिवदामूलं दृढतरबन्धाऽवच्छिन्नाऽच्छिद्रकुड्यसमलङ्कृते कूपे करादिकर्षणेन पुनः–पुन–र्विलोकनेन गूढसूक्ष्मवस्तुप्रदर्शकयन्त्रादिना मुहुर्बहुवारं स्वेनैव विशोधितोऽपि

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



स लिङ्ग-मूर्तिः शङ्करःस्तुषितकिङ्करः सुमहिमसङ्करोऽपि सर्वमथः स मे पृथक्त्वेन रूपनिरूपणमननुरूपमिति वा वाङ्मनसोरगोचरस्य सर्वेषां दृष्टिगोचरत्वमुपगन्तुमसमञ्जसमिति बाचाऽऽहोस्वित् स्वयं गाढतर-जपतपोऽनुष्ठानादिक्लिष्टतरव्रतैस्तुष्टः शिष्टानामपि कष्टेन फलप्रद-स्तुष्टिं याचनयैव लोचनपथगानां सन्तानवच्चिन्तितार्थसन्तानप्रदान-चणस्य स्वभक्तस्य, अस्य दृग्गोचरतां गन्तुं व्रीडयैव "मद्भक्तश्च ममाऽधिक" इति स्वेनैवोक्तत्वाऽऽत्मनोऽधिकस्य, अस्य भक्तस्य, अतिरक्तस्य करे सक्तोऽहं चेत् सर्वतन्त्र-स्वतन्त्रेण सकलकर्म-प्रभवता भवता किम्मित्थं अयुक्तमाचरितमिति (यतो हि शिवस्य पञ्चमुखेष्वं-न्यतमात्) सद्योजाताद् ब्राह्मणः सम्बभूव (वामदेवात् क्षत्रियः, अ) घोराद् वैश्य(:; ततपुरुषात् शूद्रः; ईशानात् ईश्वर) स्याऽत्याश्रमी (सम्बभूव, इति धार्मिकश्रद्धालुभिर्ज्ञायते; ततो निग)माऽन्तदीक्षा यथा (शास्त्रं वेधा-क्रिया-मनुदीक्षादिसंस्कारैः परिशुद्धांगां)शां गच्छन् स्तिठन् मिषन्नुन्मिषन् (स्वपन् वाऽपि जाग्रद्वाऽपि किं बहु) स्याद् भुञ्जन् मूत्राद्यु (त्सर्जन-कर्म करिष्यन् वाऽपि सर्वदा यत) ते शुद्ध देहि-(कः श्रीमद्वीरशैवः षट्स्थलसिद्धान्तपरायणपुरुषः) कण्ठे शीर्षे वक्षसि कक्ष-देशे(कुक्षौ हस्त-स्थले वाऽपि धारयेल्लिङ्गमैश्वरम् । नाभेरधस्ता-ल्लिङ्गस्य धारणं पाप-कारणम् । जटाऽग्रे त्रिक-भागे च मल-स्थाने न धारयेत् । अतः) लिङ्गं धार्यं यथा-संप्रदायं पुरस्तात् गुरोरुदित्वा हृदये मुख्यमुक्तम्" इति चतुर्वेदशिखादिवचनानां भवतैवोक्तत्वात्, धारकस्तु प्रमादादिना लिङ्गं त्वां न त्यजेत्; पुनर्निरन्तरपूजा-स्तुति-जप-ध्यान-(प्रभृतिभि)र्मनो-लयादिभिर्नित्यं तदेकायत्तचित्ततयैव त्वां सभक्ति सस्पृह सामोदं सकुतूहलं सप्रयत्नं निरन्तरं धरन्तममुं चरं वरं परं निरागसं तूष्णीमेव परित्यज्य कुतोऽगच्छस्त्विवति तेन भक्तेन पृष्टश्चेत् किमुत्तरमालपामेति, शङ्कयैव तदा केषामपि दृष्टिपथं नाऽगान्नागाऽऽस्य-जनकः ॥ ८३ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



यदा न दृष्टः किल लिङ्ग-हंसः
सदास्य-पद्मानि निमीलितानि ।
तदाऽखिलास्योत्पलवृन्दमापोन्-
मुदा विकासं निशि युक्तमेतत् ॥ ८४ ॥

तदनु (स) करडीशस्तं चरेन्द्रं च रञ्जद्-
वचनमय-सुधा-विक्षेपतस्ताप-शान्तिम् ।
कथमपि कलयंस्त चाऽन्तरीयं तरीतुं
समभवदभवांऽघ्रि-ध्यान-सन्धान-चित्तः ॥ ८५ ॥

तत्राऽन्तरे, सद्यः सङ्गतं लिङ्ग-समानयन-रूपं मङ्गलतर महिमाऽतिशयं द्रष्टुमनसा धरामुद्भिद्योत्सरज्झरस्वरूपाऽङ्गया रसातलगङ्ग एव पुनः सुरुचिरतर-करडीश्वर-सद्गुणगणजनिताऽऽनन्द-परवशस्वान्त-कूपाऽन्तर्गताऽन्त-कान्तकाऽत्यन्त-समाहित-श्लाघाकलित-शिरश्चालन-भरोच्चलित-शिरो-ललित-तरङ्गिणी-झरैरिव, तदीय भक्तिसुधारस-दान-सन्तृप्ति-तत्पर--शिव-विलोचनाऽन्त-स्यन्ददमन्दाऽऽनन्द-बाष्प-सलिल-सन्दोहैरिव, सदा मुदा मदासक्तम(हिमातिशयेन श्री-) मन्निष्ठामन्नुलिमन्मनुज (प्रीतिरसैरिव निरातं·) कं निरास-सन्निरा (करण-पूर्वकं) स्नेहभरेण हृदं (प्रदर्शयन्निव परात्पर-पर-शिवात्म-) कतल्लिङ्गाऽनुकम्पाऽमृतरस्यैरिव (परम्परा- सम्प्रदाय-रू-)ढिमत्स्वोपरिष्ट-सञ्चरिष्णु-चित्रङ्कर(-शुभकर-सुखकर-शर-जनित-निर्भार-तुष्यद् (पुष्यद् हृष्य-)न्मधुरतर-प्रीतिरसप्रवाहैरिव दीनजन-दैन्यरजः-प्रभं प्रभञ्जनाय करुणारस-झरीभिर्महतां कटाक्ष इव शाष्वत-सुख-प्रभव-चिदानन्द-सुधारस-लहरीभिः शिवयोगिहृदयमिव मकरन्द-रसैः फलप्रसवोन्मुखं कुसुममिव स कूपो निरापो दुरापोद्गमैः सवेग-मुद्गच्छदच्छसलिलानां सुपूरैरपूरि सुपूर्ष-प्रकृतिरिव सुकृताऽमृतैः॥८६॥

पूर्णः स कूपः सलिलैः सतां सं-
कीर्णाऽऽशुपूरैर्नयनानि नाऽसौ ।
तीर्णः किलाऽऽपज्जलधिस्तितीर्षो-
दीर्णं मनस्तोष-रसैः खलानाम् ॥ ८७ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



सतीर्थ्याद्याः सर्वे समुदितभयाः सङ्कटमयाः
सदा मैत्री-सक्ताः सहसमुचिताऽभ्यास-सरसाः ।
सखेदाः संक्लिष्टाः सकरुणरसा संगतशुचः
सबाष्पैर्नेत्रैः सन्ददृशुरसमं तं सवयसम् ॥ ८८ ॥

अवार्य-धैर्यः स चरेश्वरस्तान्
उवाच मा ताम्यत यूयमद्य ।
शिवाऽऽहितेनैव हि शासनेन
भवादृशां संघटितो वियोगः ॥ ८९ ॥

तत्राऽऽगताः केचन भक्तभास्वन्-
मित्रप्रभानीक्षित-वर्त्मघूकाः ।
रात्रौ च तस्यां किल जातहर्ष-
व्रतोपमाः प्रोचुरिद सहासम् ॥ ९० ॥

चरश्चाऽयं प्राणांस्त्यजति; करडीशोऽपि स महान्
चर-प्राणी सद्यस्त्यजति च कथं जीवति पुनः ।
सदा लिङ्ग-प्राणाः किल जगति लिङ्गाऽङ्गिन इति
स्फुटं शास्त्रं तेषां निगदति शिवेनैव कथितम् ॥ ९१ ॥

(परिपूर्णं सुसंवर्ण्यं परिहासोक्त-भाषणम्) ।
(निर्व)र्णकटुमभ्यर्णं दुर्वर्णं(-कृत-दूषणम्) ॥ ९२ ॥

(सर)माः किल तूर्णं (स्युर्विचारणा-विधौ तस्मिन्) ।
(तत्रत्यानां) पुनस्तेषां वचांसि (व्याहृतानि) यत् ॥ ९३ ॥

तावत्कालशिवगण-समाराधन-(तत्परो भूत्वा, प्रत्यहं सन्तुष्टि)
माप्ते गणतते कुतो मध्ये विघ्नोऽजनि ? ॥ ९४ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


शिवं-गतेऽस्मिश्चर-पुङ्गवे मे
सिद्ध(-प्रसिद्धोक्तिरिहोच्यते चेत्) ।
शिष्टः कलाऽभ्यास-विधिर्विधेयं
किमत्र शम्भो कुरुते यदिष्टम् ॥ ९५ ॥

इति प्रशान्त-शान्तश्चिन्तयन्नन्तरङ्गे कन्तुहरं, शरण-सन्तति-चिन्तित-सन्तान सन्तानं तेनान्तकारिणा तदा सूचितं कमपि प्रसाद-मन्तर्निर्धार्य, सन्तोषेण सवर्णचरितः पुरतः परितः परिताप-खिन्न-निश्चित-प्राणविनिर्गमं चरवरं गत्वा नत्वा, धृत्वा करं "स्वामिन्नु-माधव-समागमन समारम्भः समीपमागतः, समीपं समागतः समाश्वसिहि; समाश्वसिहिः; शम्भुरिदानीमेव स्वयमेव समेष्यति; मा भैषीर्मा भैषीर्मा भैषी" रिति त्रिरुक्त्वा, भयं त्यक्त्वा, मुदा युक्त्वा, तदा स्मृति-पथेनाऽन्तः प्रविश्य, चिदायत-दृशा सदाशिवलिङ्गं निरीक्ष्य, भक्ति-रज्जुनाऽवबध्य, सुमनः-सुबुद्धिकराभ्यामाकृष्य, जलोपरि शान्ति-वेदिकायां संस्थाप्येव, उत, षट्स्थल-संपन्न गयैक-स्थलेन संस्पृश्य, प्रसादि-स्थलेन सन्दृष्ट्वा, महेश-स्थलेनोर्ध्वमुपनीय, भक्त-स्थले परिस्थाप्येव महात्मन् ! निजकुण्डं रश्मिनाऽवबध्य, कूपाऽन्तर्विमुच्य, सलिलमापूर्य, समाकर्षयेति सूक्तिमाकर्ण्य, तस्मिश्चरवरे तथा कुर्वाणे तस्मिल्लिङ्गे नाऽऽगते, पुनस्तथा कुर्वित्युक्त्वा, पुनस्तस्मिन् तथाऽऽकल-य्यपि तस्मिन्नाऽऽयाते, अथ पुनः करडीश्वरः पुनर्ध्यात्वा, चरा(राधन-तत्परः) पुनस्तथा चराशु सराजमौलिः करोति कृपां; सत्यं सत्यमित्य (नेकवारं श्रद्धा-भक्तितो भाषमाणः, तत्र) स्थित-लिङ्गार्थमिति चारु भू(मौ परिभ्रमणशीलो बहु-) लस्तुतिघोषप(रायणः सम्यक्प्रहृष्टमनाः स) तदा विस्मयनीय (भावना-परिशोभित-दृढतर-) मनसि विचार्येत (इति कृत्याऽकृत्य-विचारणायां) धनाऽन्तरायेण (कर्षणा) तुरापते (राराधनासंसक्तोरगभू-)ष भक्तः पुरा गणवरालिपरिभवा(दिभिरपि सन्तुष्टो मेरे) मिण्डदेव-हलायुधार्य-साचार्य-जा(गरित-भक्तियुतश-) रणा इव किं तनिष्यति जनिष्यति किमिति भयादिव, पुनरुतः- ॥९६॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


"अङ्गमाचारमाश्रित्य । ह्याचारः प्राणमाश्रितः ।
तत्प्राणो लिङ्गमाश्रित्य । तल्लिङ्गं जङ्गमाश्रितम् ॥ ९७ ॥

इत्यादीनां प्रामाणिकतया मत्प्रणीतानां प्रमाणवचनानां बहुशः सत्त्वादात्मता--प्रवर्तमान--प्राण--स्वरूपसदाचार–मयाऽङ्ग-मङ्गलमय–जङ्गमाऽऽश्रयणमेव मे समुचितमिति वा मत्वा, सत्वरं कुण्डं प्रविष्टस्तेन स्वस्य चराऽचराऽऽत्मकतया गुरुतर-भार-भरिते कुण्डे कैरपि क्रष्टुम-शक्यत्वतः स्वयं समेत्य, तेन चरेन्द्रेण साकमूर्ध्वं समाकृष्ट–कुण्डात् सरभसं सदया सान्द्रश्चन्द्राऽर्ध-मौलिश्चन्द्राऽऽगम-जनित-कुतूहल–निर्यत्न–निर्यत–कलकूजित–कलित–चकोर–कुलवन्मुखरित–दिङ्मुख – निखिलशिवगण–जय-जय-ध्वान-कुतुकित-मनाः सनातनः प्रभुः प्रातः–पूजा–स्वीकार-कौतुकेनेव स्वयमेव तच्चरवरस्य करकमल-पीठमगाद–गाध–कृपाऽम्बुधिः; न स्थावरमिष्टमिति शिष्टानां स्पष्टीचकाराऽ–विकारः स कारण–मूर्तिः ॥ ९८ ॥

चरे परतराऽऽनन्द– । पराऽधीनो व्यराजत ।
कर-च्युत-सुराऽस्माऽऽप्ति– । स्थिराऽऽमोदभरो यथा ॥ ९९ ॥

आनन्द–बाष्प–मकरन्द-झरश्चराणा–
माविर्बभूव वदनाऽम्बुरुहे सतां च ।
सद्भक्त-भक्ति-महिमोदय-शैलदेशा
तल्लिङ्ग- हंस–समुदं च न(भो) विकासे ॥ १०० ॥

शिवाऽनुकम्पा–महिमाः । स्रवन्तः सङ्गमे पुनः ।
(भक्तानां भाक्तिकैर्मोघैर् । मेघैर्नि)र्मल–सीतलम् ॥ १०१ ॥

तद्भ(क्ति-भरेणोत्तेजनशीलः श्रीकरडीश्वरो) निष्ठाभरोत्तेज-स्तप्त-निचं(इवत् भासमानोऽपि) सन्तोषाश्रुमितान् (जनान् परमाह्ला-दयन् सकलं) सकुलं किलाऽऽशु (श्रद्धाभक्तिपुरःसरं लि)गार्चनमत्सतां (स तारतम्यं विना चकार सामोदं समुत्सवम्) ॥ १०२ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



(भक्तपिकवज्जय-जयकारं कू(जन्नेकीचकाराऽमृत(भावनां पुनः पुनः स्मारयन्निव "शम्भो ! कुरु) मंगलं; तव पाव(नं चरणयुगं सदा स्मरामि स्मरारे ! सकललोकपा)ललिङ्गं देव चिदाम्बुदे(ष्टलिङ्ग-रूपदेव ! पाहि मां कृपाकर !" इत्याद्युक्तिभिः स्तुवन्तं गुरुलिङ्ग-जङ्गमानां कृपाकांक्षिणं करडीश्वरं प्रति परशिवं श्रद्धाभक्तिमहिला-धृतमु)कुटास्तुवामागसंगमितांगनेति(तत्रत्य)जंगमा जगदुर्मुदा ॥१०३॥

तत्काले चित्कला-भाक् चरगरिमलसल्लिङ्ग-माहात्म्यभास्व
द्भु क्ति श्री-मुक्तिदान-स्थिरतर-करडीशोरु-सद्भक्तिसारान् ।
स्पष्टं संद्रष्टुमुद्बोधयितुमिव जनास्ताम्रचूडाश्चुकूजु-
र्भूयः संभूय तारस्वरभरणसमुत्कण्ठमुत्कण्ठयैव ॥ १०४ ॥

गगन–गहनाऽऽक्रान्त-ध्वान्त-दीपालि-विपाटनोद्–
रभस–विसरद्रोषोन्मेषोत्कराऽतितरौजसः ।
अरुणनयनप्रान्तोद्वान्तप्रभव बभौ हरे–
रुदय–कुधरे सन्ध्या सन्ध्याव्रताऽभ्र-गत-द्युतिः ॥ १०५ ॥

पूर्वाऽचलाऽङ्गण- सरश्चर-चक्र-युग्मं
वीक्ष्याऽति-तीक्ष्ण-विरहाऽनल-दह्यमानम् ।
एत्याऽऽशु सान्त्वयितुमर्क-मनोऽनुरागं
पूर्णो बहिर्गत इवाऽति रराज सन्ध्या ॥ १०६ ॥

भक्तस्स(स्थि)तिर्मोक्षितुं गगनमायाते च साम्बे गणैः
भूषाभोगिपतिस्फटामणिगणच्छाया प्रकीर्णाऽम्बरे ।
तस्मिन् गच्छति वीक्ष्य साऽपि च तथा यासीदिवाऽभ्रातुतदा
सन्ध्या साऽपि रुचिः प्रलिप्त-विमल-व्योमा-जगामाऽञ्जसा ॥ १०७॥

मित्रोल्लासकरः सुहृस- सुखदः सल्लोक-बन्धुः प्रियः
सूर्याऽऽमोदकरश्चरेश–करडीशाच्छ-प्रभावोदयः ।
तस्मात् स्वप्रमद-प्रदत्तमचिराद्द्रष्टुं (प्रयत्नोत्सुकः)
(प्रारूढः खलु मे-)दिनीधर-तटीभागं सरागं रविः ॥ १०८ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



(दे)वीसातिखिन्नाऽप्यनुसरति सु (ख-दुःखेऽपि सततं स्वय)मपि निजेशं संदृष्ट्वा कमलं स(सोत्साहमानन्दयतीति बुद्ध्वा) स्वकान्तनयन (शोभां परिवर्धयन्ती) (त)न्मेदिनी स्वेषा प्रिय-स्त्रीश्रिया(द्विगुणशोभा-न्वितं तं पशुपक्षिप्रभृतयः सर्वे) तोषवन्तोऽत्र के(कारवपुरःसरं ननन्दतुः) ॥ १०९ ॥

(कैलासाधीश-शम्भोः सकलगुणयुतः शिष्यरूपेण तिष्ठन्
श्रीं-श्रीमत्स्वामि-भक्तः "करडि"रिति मुदा ख्यात-मूर्तेश्च पक्षे) ।
रोषाद्रक्तः समेति द्युमणिरिति तदद्रौ च बिभ्यच्चकोरी
दीनस्वानं निशम्य स्व-दयित-सहितास्तारका दूरगाः स्युः ॥ ११० ॥

तदा, सदा सदामोदप्रभव-तल्लिङ्ग-स्वयमागमन-महिम्ना सुजन-मनांसीव विकसितानि श्रीसद्मानि पद्मानि पिशुन-हृदयानीव कुमुदानि गत-प्रमदानि शिवसमय-लसल्लीका इव कोकाः कुतुकपरि-पाकास्तल्लिङ्ग-महिम-प्रसङ्ग-समालापनैक-परशिवार्चका इव पतङ्ग-जालानि कलकल-ध्वनि-मुखरित-दिक्चक्रवालानि तथा तिमिर-निकरा-ऽऽक्षिप्त-सकल-चेतन-चक्षुः-प्रकराऽपमृत्यु-निवारणमूलिकायमान-मयूख-माला-भास्वति प्रचुरतर-करिष्यमाण-महाशिवगण-समाराधन-साधन-समुचित-सामग्री-संग्रहण-सहायतां सहस्र-करैः कामेनेव तरुणाऽरुण-किरण-स्फुरणाऽऽवरण-प्रकाशित-दिङ्मण्डले तदा मुदा वदान्य-वरः स करडीशो मङ्गल-महित-जङ्गम-महासमाराधनार्थं विविधरस-लसत्पदार्थ-समवायं समानीय, पाकविद्या-परीणता गतैः सूद-जालैः सुशीलैः सुरुचिरं नानाविधं मानेतरं लोकोत्तरं पाकाऽनीकमाकलय्य, तदनुक्रमेण त(त्राऽऽगतानां शिवस्वरूपाणां गुरुजगमानां पुरो)गाणां तदात्मक-लिङ्गनां च (शुद्धसिद्धप्रसिद्धात्मकविधिना) रूप-रुचि-तृप्ति (रूपेण, इष्ट-प्राण-भावलिंगेभ्योऽर्पतामितिम्व) करेण भक्ष्य-भो(ज्य-चोष्य-लेह्यादिनानाविधप्रसादवस्तुभिः) चराणां सन्तर्पणं वितेने ॥१११॥

(भूमा विहाऽ-)वतीर्ण संचरिष्णुजं(गाम सुक्षेत्रम्) ।
(करडीशः सुखा)वहमदादुदारमतिः स दान-शौण्डः ॥ ११२ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



(सम्यक्शोभायमाने) शिवसदसि शिरश्चालनालोलताऽभू(त्)
(श्री)रास्यारायपूराः शरणसुमहिमाभ्यास-सोल्लास-जिह्वाः ।
मातास्फीतः प्रभूतोत्सव-निवह-लसज्जङ्गमास्तुङ्गमाना
हृद्याऽवद्याऽन्यविद्याविधिषु स करडीशोऽति सत्प्रीतिरासीत् ॥ ११३ ॥

भक्तः प्रीतिर्बुभुक्षूणां । स्थाने चित्रमिदं तु सा ।
नित्य-तृप्तस्य साम्बस्य । भक्तेऽस्मिन्नतिनिश्चला ॥ ११४ ॥

सेवाभावत्तमावां मुखपुरपवधूकुन्तलोध्वान्तभव्या
कल्पानल्पाच्छ-कल्पद्रुम-सुममकरन्दांकपत्पकजाती ।
तुङ्गाऽपाङ्गांशु गङ्गा-झर-विशदतराऽनङ्गजिन्मङ्गलाऽङ्क-
स्थानासीने समाने रुचिकरुणनया प्लावयाम्बाऽव तं माम् ॥ ११५ ॥

इति श्रीविनमदमरवरनिकरमौलिमणिप्रभापटलपाटलपरशिवपदार-
विन्दस्यन्ददमन्दकृपारसमरन्दझरीपरितृप्तिमदुरेन्दिन्दिरायमान-
मानससरसकविताकुतुकाकलितपर्वतसुधीविरचिते
करडीशचरितामृतचम्पूप्रबन्धे पंचमः स्तबकः ।



॥ श्रीरस्तु, श्रीरस्तु, श्रीरस्तु ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

॥ शम्भो ! प्रसीद ॥

# षष्ठः स्तबकः

करुणा-रस-पीयूषाऽऽ- । वरणाऽञ्चद्भृङ्गं चलम् ।
तरुणेन्दु-धरं दीनो- । द्धरणं चिन्तये हृदि ॥ १ ॥

अथ कदाचिदुज्जृम्भमाणे चेतोभव-प्रभावः शुभावह-विकच-गाढ-समाऽऽलिङ्गित-तरुणतर-तरु-लता-कुसुम-विसर-हसित-शमधन-जन-घनमनःस्थैर्यः पुष्पबाण-विजयप्रयाण-समय-समुद्घुष्यत्-काहली-कलि-कलायमान-लसद्रसाल-तरुनिकर-सल्ललितपल्लव-नवाऽङ्कुर-रसझरी-समास्वादसमुदञ्चत्-सुधासार-सार-साल्य-ललत्-कोकिल-काकलीसुबोध-कलाविगलित-मानवतीमान-मनोमान्द्यः-समुदञ्चत्-तारुण्य-समुज्जृम्भन्-निविडतर-मुग्धाऽङ्गनाऽङ्गवत्समृद्ध-सम्पत्ति-प्रपासन्निवेशः, तत्रत्य-कामिनीजन-करकमल-कलित-कनककलश-स्रवन्-मधुर-हिमशीतल-सलिल धारा-सापेक्षाऽवलोकन-ससरत्कटाक्षकान्ति-सुधाझरी-युगलनिराकृततपनाऽऽतप-जनित-पिपासावद्-बालाजन-लीला-ऽवलोकन-कृतसदन-मदन-ज्वालाऽऽतप-सन्ताप-द्वयताशान्त-शान्त-सन्तोष-विश्रान्त-पान्थजन-सन्तानः सायंतनसमय-सञ्चरद्गवाक्ष-समीरण-निक्षेपण-विशेष-वाञ्छा-सम्बाधिताऽऽशाऽवकाश-शाखा-निकर-निबिड-महीरुह-लतावितान-शिशिर-च्छायोपवेशने घनशान्त-शीतल-सलिल-सत्कासार-समीपाऽनुसरणेऽनुकरणे च प्रासादोपसर्पणे प्रमोदवत्तां कलानिधि-प्रस्रुत-कान्ति कदम्बे कांक्षाभरतां सलिल-विहारे समुत्सुकतां कुवलयाऽऽप्त-शिलाकुट्टिमे कुतुशितां च मलयज-पङ्काऽनुलेपने मनःप्रीति-मत्तां मल्लीकुसुमादि-शीतल-गन्धाऽऽघ्राणने महाभिलाषां नित्यमित्थं शीतलवस्तुजातोपसेवने जाताऽऽदरतां जनानां जनयन् वनयान्त्रित-मल्ली-मतल्ली-मधुमत्त-मधुव्रत-मधुरध्वनि-जनितकुसुमधनुर्धनुष्टङ्कार-भीषण-

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


घोष-धी-महितभयः स्वयं समाश्लिष्ट-मानिनी-कुचकलश-संसर्ग-कन्दलिताऽऽनन्दः सन्दद्बाष्पझरीपङ्किल-प्रमदवनी-विहरत्-सयुवतिक-युवकजन-निकायः कायमानाभोग-मिलन्मिथुन-रति-पिशुन-कचगलित-कुसुमविसर-प्रसृमर-वनवलयेविमल-सरःस्थल-शीतल-संविलसज्जल-संस्नात-पाटली-परागाऽङ्गरागाऽनुरञ्जित-परस्परमाश्लिष्ट-तरुलतावलि-स्खलत्-स्खलद्-वनवलय-चरन्मलय-मरुन्निराकृताऽध्वग-प्रकरशमोद्गमो समापि मोहयन् भवनानि वसन्त-समयः समयः समासदत् ॥ २ ॥

सहकार-मृदुलपल्लवतल्लजरससरलकण्ठकलकण्ठः ।
मधुरमधुरमत्तमधुपो मधुरयमधुना धिनोति मदनेष्टम् ॥ ३ ॥

मधुरयं मधुरारवकोकिलप्रकरगायककीरबुधव्रजैः ।
वनतलेऽकलयत् सुमनः सभां मदनराजकृतेऽभिमतैः फलैः ॥ ४ ॥

वसन्ते वासन्ती सुमचयवसन्तो मधुकरा
रसन्तः कुर्वन्त्यध्वगकुलहृदीत्थं किल धियम् ।
अनङ्गत्वादेवाऽऽनयनपथगः पञ्चविशिखो
निजज्याघोषं किं कलयति वियोगिव्रजभियै ॥ ५ ॥

दरस्विन्नाऽब्जाक्षी वदनविधुधर्माऽमृतसुधा
कणासेकध्वस्तस्मरदहन-नन्दद्युव-चये ।
मधौ नीपाऽनीकप्रसव-मधुमत्ताल-निनदाः
समन्ताच्छ्रूयन्ते मदन-जयनाद-प्रतिभुवः ॥ ६ ॥

तोयं पाणिपुटेऽर्पयद् विधुमुखी तारुण्यमूलक्षर-
ल्लावण्याऽम्बु-झरीं पिबंश्च नयन-द्वन्द्वं स तूष्णीं स्थितः ।
किं सत्पान्थ ! तवाऽधराऽमृत-झरीं कांक्षामि चेत्युक्तमा-
कर्ण्याऽसौ च मधौ दर-स्मितमुखी नोक्ता विदत्तोत्तरा ॥ ७ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



हस्तस्थाऽम्बुनि बिम्बितां बकयुगं तस्याश्च मीनद्वयं
मत्वोर्व्यां विजहन् विचार्य सलिलं ज्ञात्वा तदक्षि-द्वयम् ।
केतू नेत्रमिषाजपांक निहितौ स्वीयौ किलाऽस्या मुखे
जेतुं विश्वमिति प्रकम्पित-शिराः पीताऽम्बु-शातादिव ॥ ८ ॥

भृङ्गाल्या सुमनोरसं शुकपितप्रष्टद्विजन्मालये
नित्यं सत्फल-पल्लवानि शिशिरच्छायां च पान्थालये ।
दत्वाऽयं सकलोपचारमधिकं कृत्वा रसालो मधौ
ख्यातोऽभूत् सहकार इत्यसुमतां हानेन मानोमहान् ॥ ९ ॥

शुकमुखसद्विजयभजनं सुमनःसङ्घे च वहति सहकारः ।
सहति पराग-स्फुरणं सत्फलवत्त्वं तस्य तत्र घनम् ॥ १० ॥

सन्तापं जनयन् नृणां क्षितितलं तप्तं च कुर्वन् मनाग्-
वापीकूपतडागतूरसरितां तोयेषु तन्वन् रुचिम् ।
पान्थानां च रतिं प्रपासु कलयन् प्रायः पिपासाभरा-
दायातः पुरतो मधुर्घनतपः क्षौणेन्द्रमन्त्रो [1]क्षितिम्[1] ॥ ११ ॥

एतादृशि तपनाऽऽतप-सन्तप्त-दिगन्तराले काले मधौ लीला-रचितं निखिलजन-सन्ताप-शान्तिकरं करडीश-चरितं हृत-दुरितं नय-भरितं श्रवण-गलित-सकलव्यथं मिलितपुरातनपथं फलित-मनोरथं दूरीकृत-कुपकथं कथयामि ॥ १२ ॥

यो यामुवास्ते किल देवतां वै
स सैव बाढं भवतीति [2]वेदः[2] ।
अन्वर्थको भूदिह तुङ्गभद्रा-
मुपाऽऽश्रिता यद् भुवि तुङ्ग-भद्राः ॥ १३ ॥

---

[1] क्षितेः 'ख' पुस्तके ।

[2] वेद 'ख' पुस्तके ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



पद्माऽऽनना कोक-कुचोत्पलाक्षी
शैवाल-संमञ्जुल-रोमराजिः ।
आवर्तनाभिर्ललितोर्मिबाहुः
कान्तेव कान्ताकृतिरापगेयम् ॥ १४ ॥

केदारेक्षुवनावनीतटलसच्चूतालिनी सं-
जातां चन्नवमल्लिकामुखलतामालाङ्कवेलाङ्किता ।
रङ्गत्तुङ्गतरङ्गरिङ्गणमिलन्मीनालिनानाविध-
ग्राहे व्यूहमुखोच्चलज्जलचरानीकावनोकस्थली ॥ १५ ॥

पुनः, सा तरङ्गिणी रङ्गत्तटद्वयनवन्मञ्जुलकलममञ्जरी, पुञ्जपिञ्जरी, भवत्केदारनिबिडतरेक्षुसन्दोहसन्दानितक्षेत्रनिचयरुचिरतरनिचितरसलसद्रसालमुखफलावली, कुसुमविसरकिसलयप्रसरप्रसृमरविविध-तरुलता, भवसङ्गताऽधितमाङ्गल्यान्निजतुङ्गभद्राऽभिधामन्वर्थयन्ती, तपत्तपनाऽऽतपजनितसन्तापाऽसहतया निजशीतलसलिलाऽवगाहनमाचरद्भिर्वल्लरीकलितवेला, विविध सालाऽधिकजाजूरिव विमञ्जलान्तगतैस्तदीये स्खलितकल्लोलमाला सञ्चलद्भिस्तदीयैः प्रतिविञ्जृम्बलम्बिता सलिलकेली मिलत्सविधविविधपुरपरीतसरोजमुखी नलत्कठिणकुचतटे सङ्घटनपरितृषितगुणपटलपारावली स्खलितमुक्तामणी प्रकरमन्तर्वहन्ति स्वभर्तृसलिलनिधिवत् स्वयमपि रत्नाकरतामवलम्बितुमिव लम्पटे विकचकुसुमविसरफलनिकरभरनमितशिखरशाखामलिभिरलिमधुरझङ्कारनिनदसङ्कुलैरुभयतटमहीरुहैर्निजमधुरशिशिरसलिलझरी सञ्जनित-संवर्धिततयोपकृतेः किञ्चित्प्रत्युपकृतिं कर्तृकामैरिव सप्रणाम सस्तवं च समर्पयत्कुसुमफलप्रसरपरिग्रहणप्रसरितकरेव तटीं तन्वङ्गद्रङ्गत्तरङ्गा वारिविहारनियतवारवारिजमुखी वारालिककण्ठगलकुचवक्षो-विलिप्तमलयजकस्तूरिकाश्मीरपङ्कसङ्कुलसङ्कलितप्रवाहततया गङ्गा-यमुना-सरस्वती-सङ्गम-मिवाऽभिनयन्ती सलीलाऽऽहरणसमागतपरिसरपुरसरसिजमुखी करकमलघटितघटपटलप्रतिबिम्बैरिमेऽस्मत्कान्तभङ्गघटकाऽगस्त्यजनका बहवः सम्भूय समागताः, पुनरिदानीं

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



मज्जीवसमाहर्तुमुद्यता इति सद्यः सामर्षं निजागाधजलान्तर्दूरनियन्त्रितेव पवमानप्रवातसमुल्लोलकल्लोलतया प्रातः स्नानार्थमुपागमिष्यत्तपोधनमवहं निर्वर्ण्य पुरेतादृशमेकं महर्षिमलक्षीकृत्य किलाऽर्णवः पूर्णपदमापन्नस्तन्महात्मनां पुरस्थाने नम्रगामिनीव लक्ष्यमाणौ सक्रीडमाक्रमच्चक्रवाकचरणाऽऽहृतिचलितचामीकरकमलकल्हारकुसुमविसरप्रसरत्परागपटलपरिष्कृत समुत्पतज्जलशीकरनिकरपरिकलितत्वं सतृतरङ्गस्खलितचलितललितसमीरणसंसर्गनिरर्गलनिर्गलत्मार्गश्रममधुरशीतल - पयःपानपरिचलितसन्तापजनितसन्तोषपथिकजनसन्तानसमाहितनिजप्रशंसा, पुनरुभयकूलमभितः पङ्क्तिशः प्रवृद्धपवन-सपाटल-जम्बुजम्बीरनारङ्ग-नारिकेल-कदली-कपित्थ-कदम्ब-तिलकाऽलक-रसाल-दाडिमवक-वकुल-लिकुच-तमाल-तालहिन्ताल-पूग-पुन्नाग-चन्दन-चम्पक-लुङ्गलवङ्ग-द्राक्षा-मालती-माधवी-मल्लिका-यूथिकामुख-तरुतला-प्रतानवनैर्मनोहरा परमजपतपःप्रवीणतपस्विजननियमाऽनुकूला सुकृतभाद्घनकुटुम्बिस्थितिरिव संगृहीत-बहुजीवना, सुरवल्लरीव सुमनोजनावलिमनीषित-फल-प्रदा, विघ्नराजजननीव विरूपाक्षवामप्रदेशकल्पितसन्निवेशा, पानेन तापमिव, स्नानेन पापं विलोपयती शीतलमधुरकुल्याजलेन सस्यांऽकुरसंवर्धनमिव नियमकुलैर्मनोरथवर्धनं तन्वती, निजमज्जज्जन-विमोहं धुन्वती,[1] समासृत[1]जनसुकृतं धिन्वती, परम-पावनी, सुत्रनोवृन्दाऽमन्दाऽऽनन्दसन्दायिनी स्यन्दमाना रराज धराजनसुखगा ॥ १६ ॥

वातोद्धूतपतत्तटद्रुमसुमश्रेणी प्रसर्पद्रज-
श्चेलाऽऽच्छादितचन्द्रपङ्कजदलं चोलं पृषन्मौक्तिकम् ।
पद्मोलिस्तिलकं मुखे कुवलयं चक्षुर्लसत्कज्जल
डिण्डीरं नवचन्दनं हि तटिनीयोषासुभूषाञ्चितौ ॥ १७ ॥

विमलतरुविपाक्षोत्तमाङ्गभूकलितललितलहरीयम् ।
विबुधजनाञ्चितसलिलातुङ्गा गङ्गेव सरतिचिरमहिमा ॥ १८ ॥

[1] समाश्रित 'ख' पुस्तके ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



सुमनोऽभिलषितवितरणचणसुपयः पूरपूरितः तुङ्ग ।
देवेशरागभाजनमूता भू-कामधेनुरिति न मृषा ॥ १९ ॥

तत्तादृक्तटिनीतटे सुविलसः सम्पूर्णसम्पत्तिभाक्
पम्पाक्षेत्रमितिप्रतीतसुयशः पूर्णं हि कीर्णोत्सवम् ।
तत्सत्क्षेत्रमहत्वमद्भुततरं नाऽलं हि वक्तुं किल
ब्रह्माद्यास्तदतिप्रसिद्धमवनावद्याऽपि विद्योतते ॥ २० ॥

दक्षिणमभिमतकरणदक्षिणमेतद्भवाऽघभयहरणे ।
दक्षिणमुद्धरणे तद्दक्षिणकाशीति नाम सम्प्राप्तम् ॥ २१ ॥

पुनरिदम् :-
रङ्गद्विरूपाक्ष नाम । लिङ्गं तत्र सनातनम् ।
मङ्गलं हि"वि"शिष्टादि- । तुङ्गर्षि-परिपूजितम् ॥ २२ ॥

अवाङ्मानसमेतस्य । महत्त्वं हि महीशितुः ।
केनाप्यमन्तव्यमहो । लघ्यः किं जानुनाऽम्बुधिः ॥ २३ ॥

अन्येषु सर्वदेवेषु । देव-शब्दो निरूपितः ।
देवेऽस्मिन् श्रृति-मुख्येषु । महत्परमुदाहृतम् ॥ २४ ॥
तस्मात् संसार-भीतो यो । महादेवमुपाश्रयेत् ।
इष्टार्थप्राप्तयेऽन्यद्"रू"- । त्यक्त्वा कल्प-तरुर्यथा ॥ २५ ॥

पम्पानामसरो विराजति सरोजाताऽलि-जातालिसं-
गीतोद्यद्विभवं गिलन् मधुझरीनव्यारवव्याजतः ।
भक्त्या ये खिल जातु मज्जनविधिं कुर्वन्त्यखर्वं निजाऽ-
भिख्य-व्यत्ययवर्णवाच्यमचलत्सम्पत्तिलुम्पद्यतः ॥ २६ ॥

अत्युद्दामहरिप्रिया जगृहिणीं शक्राङ्गनामन्मथा-
र्धाऽङ्गी सुन्दरता पृषद्यदचलद्रूरालयकू"पा"रभूः ।
सेयं निर्गुणमद्वयं किल विरूपाक्षं सरूपाऽ"क्ष"तां
नीत्वा पीडति चाऽत्र चित्रमहिमा सम्यत्सु पम्पांऽबिका ॥ २७ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


अत्र क्षेत्रे पुरा रामो । रावणस्य जिगीषया ।
तपश्चचार सु तारां । इतराऽसाध्यमद्भुतम् ॥ २८ ॥

तेन तुष्टो विरूपाक्षः । प्रसन्नः करुणा-निधिः ।
तज्जयार्हं निजं रूप- । मदाद्रामाय विष्णवे ॥ २९ ॥

तत्प्रसन्न-विरूपाक्ष- । स्थलमद्याऽपि विद्यते ।
यत्र प्रसन्न-देवेशो । निजमस्त्रं ददौ महत् ॥ ३० ॥

अगस्त्य-मुनि-सन्दत्त- । शिवदीक्षा-प्रभावतः ।
रामः पाशुपत-प्राप्ते- । र्दुरापोद्दाम-दीप्तिमान् ॥ ३१ ॥

तन्महिमाम्बुधिं तीर्त्वा । कपिसैन्य-समन्वितः ।
गत्वाऽगम्यां पुरीं लङ्कां । जित्वा महाबलान् ॥ ३२ ॥

कुम्भकर्णेन्द्रजिन्मुख्यान् । व्यापाद्य रण-लम्पटान् ।
अजेयं रावणं चाऽपि । जित्वा पूर्ण-मनोरथः ॥ ३३ ॥

गीयमांणो देवगणैः । प्रमोदभर-मेदुरैः ।
लब्ध्वाऽथ सीतां संशुद्धां । तया सह सलक्ष्मणः ॥ ३४ ॥

(नत्वा पम्पाऽधिपं देवं । विरूपाक्षेश-नायकम् ।
गत्वा निजां पुरीं रामो । ननन्द सह बन्धुभिः ॥ ३५ ॥

एतत्सर्वं विरूपाक्ष- । लिङ्गस्य करुणा-बलम् ।
वत्सस्य कामधेनोः किं । मुग्ध दुग्धे दरिद्रता ॥ ३६ ॥

तत्परित्यज्य निखिलं । लिङ्गपूजा-रतो भवेत् ।
उदर्कफलसंकांक्षी । यः कश्चिदपि भूतले ॥ ३७ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



सुरस्य त्वसुरस्याऽपि । नरस्याऽपि शुनोऽपि वा ।
लिङ्गाऽर्चनादत्र महा- । क्षेत्रे श्रेयो हि सिद्ध्यति ॥ ३८ ॥

अत्र चैकां कथां वच्मि । सद्यः पङ्कौघ-शोषणीम् ।
ब्रह्मोत्तराख्य-खण्डे च । व्यासेन कथितां पुरां ॥ ३९ ॥

यस्याः श्रवणतः सर्वे । फलन्ति हि मनोरथाः ।
वसन्तकाले सम्प्राप्ते । वने तरु-लता यथा ॥ ४० ॥

तां कथां कथयाम्यद्य । तुष्टि-पुष्टि-प्रदायिनीम् ।
पापौघ-भय-संहर्त्रीं । शृण्वन्तु विमलाऽऽशयाः ॥ ४१ ॥

शौनकमुखमुनिवर्यसूत पप्रच्छुरादराद् भक्त्या ।
लिङ्गार्चनाफलं तद्वद् क दृग् भवति देहिनां जगति ॥ ४२ ॥

एवं निशम्य तद्वाक्यं । सूतः प्रोवाच सोत्सुकम् ।
लिङ्ग-पूजा-फल वच्मि । श्रृणुध्वं भक्ति-भावतः ॥ ४३ ॥

भूपतिं किल विमर्शनामक
प्राह तत्प्रियसती ककुद्मति ।
शम्भु-भक्ति-भरितस्य कां तते
किं पुनः पिशित-सेवनाऽऽदरः ॥ ४४ ॥

मत्पूर्वजन्म-वृत्तान्तं । वदामि श्रृणु कामिनि ! ।
तस्मादेव हि संस्कारा- । दीदृशं चरितं मम ॥ ४५ ॥

पम्पायां भषकः पुरा परिचरन् माधान्त-पक्षे चतु-
र्दश्यां शिष्टकृतं शिवार्चनविधिं दृष्टः प्रकृष्टं बलिम् ।
लोलाल्यङ्ग-गृह-प्रदक्षिणमरं कृत्वा हतस्तैर्मृता-
स्तस्मात् सप्तजनप्रबोधनियुतो राजाऽस्मि राजानने ॥ ४६ ॥

तथा त्वं यदि वृत्तान्तं । पूर्वस्य मम जन्मनः ।
वदेति प्रेतया पृष्टः । प्राह तां स महीपतिः ॥ ४७ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



पूर्वं त्वं हि कपोतिका तव मुख-ग्रस्ता मिषेच्छाभराद्
गृध्रेण त्वनुधाविता गतवती श्रीशैललिङ्गाऽऽलयम् ।
भ्रांत्या तत् परिवेष्टनं कृतवती क्लान्ता ध्वजाऽग्रथिता
तत्त्रोटी निहता मृता क्षितिपतेः कन्याऽतिधन्याऽभवः ॥ ४८ ॥

स्व पूर्व-जन्म-वृत्तान्त- । माकर्ण्य तरुणी तदा ।
सन्तुष्ट-मानसा कान्त । भक्त्या सा पुनरब्रवीत् ॥ ४९ ॥

शिव-प्रसादाद् विदिताऽऽद्य-जन्म-
कथा भव सा तु शिवे सुभक्तिः ।
दृढा बभूवोत्तरजन्म-वार्तां
वद स्वनोकान्त-शिवात्तबोधः ॥ ५० ॥

गदितवर्तामिति सुदती-
विदितोत्तरजन्मनिखिलवृत्तान्तः ।
मुदितमनाः प्राह सता-
मुदितशिवज्ञानभक्ति-सम्पन्नः ॥ ५१ ॥

द्वितीये सिन्धु-देशाधि- । राजोऽहं जन्मनि प्रिये ! ।
त्वं हि सृंजयदेशाधी- । श्वर-पुत्री सती मम ॥ ५२ ॥

सौराष्ट्रदेशाधीशोऽहं । तृतीये जन्मनि प्रिये ! ।
त्वं कलिङ्ग-महीशस्य । तनूजा हि मम प्रिया ॥ ५३ ॥

चतुर्थे किल गान्धार- । देशाधीशो जनुष्यहम् ।
त्वं पुतमंगधाधीश- । कुमारी मम भामिनी ॥ ५४ ॥

पञ्चमेऽहं तु जनुषि । भविष्याम्यन्त्य-देशराट् ।
त्वं दशार्ण-क्षितीन्द्रस्य । सुता मम सती पुनः ॥ ५५ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


षष्ठे चानर्तदेशेषु । भविष्यामि हि जन्मनि ।
त्वं ययाति–क्षितीशस्य । जाता वंशे मदङ्गना ॥ ५६ ॥

पाण्ड्याधिराजतनयो घनशौर्यधैर्य–
सौन्दर्यमुख्यगुणभूरिति पद्मवर्णः ।
नाम्नाऽहमन्त–जनुषि त्वमियं विदेह–
राजात्मजा वसुमतीत्यतिसुन्दराऽङ्गी ॥ ५७ ॥

तत्राऽपि भीम-तनया तु यथा नलं माम्
अङ्गीकरिष्यसि नृपाल–कुमार–सघे ।
तत् क्रुद्ध-राज-निवहं तुमुले विजित्य
साम्राज्य-भोग-महितः सहितस्त्वया स्याम् ॥ ५८ ॥

इत्थं भामिनि सप्त जन्मसु पुनर्जाया–पती शम्भु-सद्–
भक्तौ राज्य-सुभोगमेत्य सुतरामन्ते शिवाऽनुग्रहात् ।
गत्वाऽगस्त्य-मुनीन्द्र-पुङ्गवममुं शैवीं ततः प्राप्य सद्-
दीक्षां तन्महित-प्रभाव–बलतः कैलासमेष्यावहे ॥ ५९ ॥

इत्थं निगद्य स नृप– । स्तया सह तथैव हि ।
भुक्त्वा भोगांस्ततः प्राप । प्राप्यं हि शिव-सन्निधिम् ॥ ६० ॥

इत्थं सकलाऽभीष्ट– । दानातिक्षणमन्वहम् ।
ततो दक्षिण-काशीति । विश्रुतं जगती-तले ॥ ६१ ॥

एतादृङ्महिमौघसस्यधरणौ क्षेत्रेऽत्र चैत्रादिमे
पक्षे पर्वणि सद्रथोत्सव–समारम्भो हि शम्भोः सदा ।
प्रत्यब्दं नियतस्तदुत्सव–समालोकेन लोकावली
सन्तृप्त्यै करडीश्वरो यतदुपागन्तुं स सन्तुष्ट-धीः ॥ ६२ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



वीक्षामात्ररसादसौ किमु भजेत् क्षेत्रं हि यात्रा गतौ
सर्वोर्वीजनतर्पणाय किल भूशान्त्यै घनाऽभ्यागतिः।
तस्मान् खण्डशितापयश्चणकदाल्यभ्यूषमृष्टोदनै-
स्तत्रत्याऽखिलपारणासमुचितेत्यालोचि कालोचितम् ॥ ६३ ॥

तनयस्ततविनयकृतिघनययत्नचणो विचारितस्तेन।
इदमेव विरूपाक्षेश्वरयजनं चेति सोऽवदन् मतिमान् ॥ ६४ ॥

तदा तेन सुपुत्रेण। मित्रेणेवोदयाञ्चिता।
विकसन् मानसाऽम्भोजाऽ। भिनवश्रीसमन्वितः ॥ ६५ ॥

पुत्रं कलत्रं किल सच्चरित्रं
चित्रं करस्वाभिमताऽनुयात्रम्।
मित्रं मनोरागरसालचैत्रं
पात्रं मुदोभागभृतो लभन्ते ॥ ६६ ॥

ततस्ताऽऽत्माभिरतेन सुतेन साकं स तादृङ्महाकार्यनिर्वहणचण-तावत्खण्डशर्करादिमहाऽमूल्यवस्तुसामग्रीसंग्रहणं निभृत-व्ययेऽपि क्षय-मनधिगतं निधिमिव निरायासं निःसंशयं निरातङ्कं निर्भयं निरुपमं नितरामितरानवाप्यं निजोभय-भक्तिकामदुधादुहद्दुग्ध-वितानमिव ततान कृताऽनल्प-प्रयत्नः ॥ ६७ ॥

समस्त-वस्तु-प्रकरैः समेतः
समन्वितो बान्धव-साधु-संगैः।
स मान्यदार-स्नुष एव सर्वैः
समं समोदं स महान् प्रतस्थे ॥ ६८ ॥

शास्त्राऽभ्यास-विशुद्ध-शब्दविलसद्भाषाऽच्छ-भूषाऽऽननैः
शिष्यानीकसुबोधसाधनसुवाक्पालीसुकेलीरतैः।
अन्योऽन्याभिमतार्थ-शंसन-लसद्वादाऽनुमोदाऽञ्चितैः
साकं लोकनिजश्रवोऽमृतवचो लीलाढ्यशालागणैः ॥ ६९ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



शिवानुभावार्थ-भवाच्छ-बोधो-
त्सवातिसौख्यानुभवानुरागैः ।
सुवाग्घनासार-निवारितां हो
दवानलैः क्रान्तशिवैश्चरेन्द्रैः ॥ ७० ॥

साकमित्थं स सर्वैस्तै- । र्लोक-विश्रुतकीर्तिमान् ।
श्रीकण्ठमतवार्धिश्री- । राकेन्दुः क्षेत्रमभ्यगात् ॥ ७१ ॥

तादृक्सम्भृतवस्तुपूर्णशकटव्रातोरुचक्रा रुत-
क्षोणीशोणरजःपरीतनिखिलक्षेत्रप्रदेशाऽम्बरम् ।
यात्रायातजनातपार्तिहृतये संच्छाद्य संस्थापित-
प्रोद्यद्रक्तपटीकुटीव शुशुभे तेनाऽतिमानायतिः ॥ ७२ ॥

स तुङ्गभद्रा तटिनी तटाऽन्तिका
वनौ घनं शाकटवस्तुसञ्चयम् ।
निवेशयित्वाऽथ ततान मञ्जुलं
स्थलं स्वकार्योचितमायतान्तरम् ॥ ७३ ॥

स्नान-स्थलं लिङ्गपूजा- । स्थलं मुक्ति-स्थलं तथा ।
सुखोपवेश-निलयं । स्वापाऽर्हाऽऽयतनं तथा ॥ ७४ ॥

सभोचित-स्थलीं सम्यग्- । विहार-स्थलमेव च ।
घन-पानक-पात्रौघ- । विनिवेश-स्थलं महत् ॥ ७५ ॥

पाकाऽर्हाऽऽवरणं सूदाऽ- । नीकाऽभिमतमायतम् ।
स्तोकेतर-पयःपात्राऽऽ- । ल्याकल्पममलं स्थलम् ॥ ७६ ॥

समस्त-वस्तु-प्रक्षेप- । स्थलमेवं पृथक् पृथक् ।
कथितं रमणीयं तद् । विमलं समलङ्कृतम् ॥ ७७ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



तदनु, जङ्गम-तृप्तिरेव लिङ्गार्चनं सकल-मङ्गल-कर्म सुतुङ्ग-तरमिति च श्रुतिमुख्य-वचनतति-प्रतिपादित-पुरातन-सरणिमासाद्य तत्सन्तर्पणार्थं मधुरतर-भक्ष्य-भोज्यमटित्रवैकरप्रणीताभिः(?) सला-पस्करोपस्कृतशाकोपकलितपाकं लोकोत्तरमाकलय्य, न खं पचललाटं तपनकरकराले काले तस्मिन् अभ्यागत-सकलजनसन्तापशान्तिकृते सम्यग् रचित-खण्ड-शर्करा-क्षोदराशि समानीत-तुङ्गभद्रा-शीतलपयः-पुञ्ज-मञ्जुलालंजरादिभाण्डषण्डेषु प्रक्षिप्य, सुरुचिरेला-परिमल-चूर्ण-पूगं, सम्मिश्रयित्वा तादृग् वसन्तसमय-तपत्तपनाऽऽतप-जनित-पिपा-सोपताप-लोपकरणचण - शिशिर-मूलिकारसविसरमिवातिमधुरमाधुरं, पानकं पान-कम्पन-जनकाऽति-शैत्यं चणकदाल्यभ्यूष-कूटोपकरणं चाति-ऽसुरुचिर-वस्तु-रचना-चातुरी-कलया सकलया कलयामास ॥ ७८ ॥

पुरा वृषेन्द्रस्त्रिपुरान्तकेश्वरा
करे मराली-परितृप्ति-हेतवे ।
यथैव सर्वं रचितं विधानत-
स्तथैव सज्जं विदधे किलाऽखिलम् ॥ ७९ ॥

तदनु, सदनुमोदेन घण्टिकानाहूय, किलाऽन्नेन दीनेन केनचिद् विहितां खण्डशर्करा-पानक-पानाऽभ्यूष-निषेवण-सुभोजनरूप-सेवां परिगृह्य, मामिमं कृतार्थं कुर्वन्तु भवन्तो महान्तो महेश्वर-भक्ताश्चेतरे जनाश्च समागन्तव्याः इति पुनः पुनरुच्चारण-पूर्वकं घण्टा-चक्राण्युद्-घोष्योद्घुष्य, सकलान् समाह्वयन्तामिति, तत्कर्मणि तान्नियुज्य, सभक्ति सविनयं सानुकम्पं सर्वेषां माहेश्वराणां भक्तानां, इतरेषां च समाह्वाननकर्म महाऽभिलाषपूर्वं सर्वं निर्वर्तयामासुः ॥ ८० ॥

किञ्चिद् दर्शन-कांक्षया च कतिचिद् गर्वे न युक्तो मह-
त्यस्मिन् नित्यपरे लभेत कथमेतादृक् प्रसादो महान् ।
इत्यन्ये च रसाधरीकृतसुधास्वादे हि तत्पानके
लोकादेव समाययुर्निबिड-सन्तोषादरेषा जनाः ॥ ८१ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



ततः, समाहूवाननध्वनद्घण्टीचक्र-चक्र-निध्वानमध्वानमध्वरभुजाऽपि दधानं विदधानमन्तरानन्दमाकर्ण्य, मधुरतरपानक-पानकलित-कांक्षया कैलासाद् भुवमवतरत् पारिषदगण इव करडीशाऽनुचर-भक्तजन सभक्ति समाहूता मातङ्गादिपर्वतेभ्योऽवरोहणमाचरन्तश्चर-निकरान् तथा श्रीमन्महाविरूपाक्ष–लिङ्गं प्रसन्न-विरूपाक्षमहोन्नत-वीरभद्रेश्वर–प्रमुख–प्रतिमाश्चाऽप्रतिमात-जङ्गमाकृतिमापद्य पानक-लिप्सया समागच्छन्तस्तत् पिपासया ह्यु पागमद्वन-देवता इव रंगत्तुङ्गभद्रा तपोवान्तवन-सन्ततेः समागताश्च माहेश्वरास्तथा करडीश-भक्तिसुधा-झरीपरीत–तत्पानक-पान–कमनीयभक्तिसिषाधयिषयेव भक्ति-रताः सकला भक्ताश्च तद्घनतरशरण-करुणा-लब्ध–तत्पानक-पवित्रकलेवरता परिप्राप्यदुत्तरोत्तर-जन्मलाभाऽभिलाषधिषणाश्चेतरे जनाः सर्वे सम्भूय समादराः समाजग्मुः ॥ ८२ ॥

ततः समालोक्य चर–प्रतानं
भक्तांस्तथाऽन्यान् करडीश्वरोऽसौ ।
प्रावृट्–पयोदाऽभिगमाऽति-हृष्टः
केकीव संस्तुष्ट–मना बभूव ॥ ८३ ॥

मरिबसवकुमारस्तुङ्ग-सज्जङ्गमौघान्
विशदगुण–सुभक्ताऽनीकमालोकमानः ।
अमनुतरमयोऽयं शाम्भवो जृम्भमाण–
प्रचुरतरघृणा संप्रापकश्चोपकर्ता ॥ ८४ ॥

तातः सुतस्तौ च परोपकार–
व्यग्रे समग्राऽमलचारकृत्या ।
भृत्यान् नियुज्याऽखिल–भव्य–सेवां
संकारयामासतुरत्युदारौ ॥ ८५ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



स्नात्वाऽथ लिङ्गाऽर्चनमारचय्य
स जग्धि गेहे च न पीति गेहे ।
माहेश्वरास्तुङ्गतराः सुभवता
भुक्ता निपेताश्च मिथोऽनुलापाः ॥ ८६ ॥

बुभुक्षितैः कैश्चन भुक्तमुच्चैः
पिपासितैः कैश्चन पीतमेव ।
अभूषमेतद्द्वितये प्रसक्तं
माध्वीकमृद्वीकगता सितेव ॥ ८७ ॥

तदानीं पुनः पुनः करडीश्वर-मरिबसव-कुमार-समाहिता समान-समादर-समादर-पूर्वकमुखचन्द्रनिर्यद्विनयवाक्पीयूषझरीपानकं दलि-ताऽऽनन्दमनश्चकोरवृन्दा भक्तमाहेश्वरपरंपराः परं परीताः परितः पुरतः पुनरित्थमस्फुरन् ॥ ८८ ॥

पायं पायं सुधातिक्रमणचणरसं पानकं पानकर्षत्,
काया मे याति तापं हिमकरणकलाशीतलं भूतले तु ।
कुत्राऽमुत्राऽप्यलभ्यं त्विति कुतुकितधीः कीलिता मीलिताक्षा
निद्रा-मुद्रां दधाना इव शिवनवसुध्यानसन्धानसक्ताम् ॥ ८९ ॥

तथा च तत्पानकसमास्वादनलोलं निजशालाविबुधजालम् ।
समालक्ष्य सुगुणलालसा साधुशीला लीलयेत्थमालपन् ॥ ९० ॥

पीयूषपानकवसद्रसतारतम्यं
सम्यग्विबोधन-धिया क्षितिमानता हि ।
देवा अमी प्रमुदिता विबुधाः सुपर्व-
भावाः पिबन्ति च ततः सह संस्कृतोक्त्या ॥ ९१ ॥

तदनु, सदनुष्ठितं सर्वं शिवमयं जगन्न किञ्चन शिवादन्यदि-त्यादि सत्याऽमल-शिवाऽद्वैतसिद्धि-प्रतिष्ठापकाऽखण्ड-ज्ञानबंधक-

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


वचन–निचयार्थं-मन्तरनुसन्धाय शान्तमनाः स करडीशस्तदितरेषा-मलिङ्गधारणामखिलजनानां सन्तानस्य सन्तर्पणं प्राज्यतरभोज्याऽभ्यूषपानकैः साऽनुकम्प परिगलित-पिपासा-संक्रमित–तन्मुखविकारं चकार नकाररिपुः ॥ ९२ ॥

पपे जनैः पानकमाननाऽब्जैः
पिपासया तप्ततरैस्तदस्तु ।
उपेतसन्तृप्तिभिरम्बकाऽब्जैः
कृपा-समुद्रः स च चित्रमेतत् ॥ ९३ ॥

इदं सुधा किं वसुधावतीर्णा
कल्पद्रुमोद्यत्फलसद्रसौघः ।
किं वेति तत्पानक-पानतुष्टा
भक्ताश्चराश्जाऽन्यजना ह्यशंसन् ॥ ९४ ॥

एवं दिनत्रयं तावत्- । तृप्तिं स विदधे महान् ।
तत्कृतिः सर्व–सच्चित्त– । भित्तौ चित्रं लिलेख च ॥ ९५ ॥

एवं तावद्भावनीयं जनितरागमनितरासाधारणमालोक्य तच्चरित्रम् ।
करमस्तोका लोकानीकाश्चेत्थं भृशं शशंसुः ॥ ९६ ॥

सा शर्करा तस्य तु शर्करासु
वस्तुव्रजाःप्रस्तरमृत्तिकोघाः ।
शिवार्चकानां घनसन्महत्त्वं
शिवो विजानाति न कश्चिदन्यः ॥ ९७ ॥

अन्यानवाप्ये दृगतक्यंकार्ये
पर्याप्तवस्तूत्करसंग्रहं हि ।
कथं चकराऽऽशुगकारणात्मे-
त्यचिन्तयत्यान्तरनन्तलोकाः ॥ ९८ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



नित्यं सहस्रचरतृप्तिकरः कथं श्री-
नन्दीश्वरोऽयमिति लोकगतां च शङ्काम् ।
लक्षद्वयाऽधिक-जनावलि[1]तृप्तिमत्राऽऽ-[1]
धाय व्यमोहयदुपाश्रितपारिजातः ॥ ९९ ॥

एवं जन-व्रज-घन-स्तवन-त्रपा सं-
क्रान्तो नितान्त-भयभक्तिभरेण बाढम् ।
दत्तार्धं-साह्यशिरसा तरसाऽति नम्रोऽ-
प्यत्युन्नतोऽभवदसो भुवि चित्रमेतत् ॥ १०० ॥

तथा च श्रीविरूपाक्षेश्वर-दर्शनार्थं जना यावन्तो यान्ति तथैव स्वसन्दर्शन-समागततावज्जनसमाहितप्रतिवन्दनवृन्दं प्रति प्रतिवन्दनाऽर्पणं कस्याऽपि भवेदिति धिया भिया नयाकलिततया विनम्रसितभसितोल्लसितफालमूल-न्यस्त-हस्ताञ्जलिपुटेन दिवाऽपि ज्योत्स्नाऽऽवरण-तरुणहिमकिरणबन्दीकृताऽरविन्दमुकुलसुन्दरेण परं विराजितश्चेत्थं दिनत्रयमुपावनत् स पावनः कृपावनधिः ॥ १०१ ॥

घूकाऽनीकं शोकं स्तोकान्यदुपैति लोकबन्धुरुचा ।
तद्वद् विद्वत्प्रभुतत्प्रभया निभयायुराधिमेति कुधियः ॥ १०२ ॥

राकासुधाकरकलामुदिताश्चकोरा-
नीका यथा हिमकरं भुवि सज्जनौघाः ।
लोकाभिराम-तदुदारयशःसु धाम-
स्तोकान्निपेय जगदुर्जगदुन्नतं तम् ॥ १०३ ॥

विरूपाक्षोऽस्य सद्भक्ति । शश्लाघ शिरसा भृशम् ।
समुत्कीर्णं-शिरोगङ्गा- । झरीसिक्तसभाजनम् ॥ १०४ ॥

---

[1] तर्पणं सं- । कृत्वा 'ख' पुस्तके द्वितीयः पाठः ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


नन्दीशः सुतवीरसङ्गमविभूद्वल्मीकरन्ध्रोत्थित-
व्यालं चाऽऽभरणं विधाय विदधे सत्रे यथाऽऽराधनम् ।
साकं तेन तथासुतेन चैतत्कृतिं
कृत्वा श्रीकरडीश्वरः किल ययौ सर्वैः समं स्वां पुरीम् ॥ १०५ ॥

रङ्गतत्तुङ्गाऽऽपगाऽम्भः-स्नपनविमलसर्वाङ्गदेवाऽङ्गनाली
पाणिश्रेणिस्थपम्पा शरशतशरः कञ्जसंरंजितांऽघ्रे ।
साक्षाद्दाक्षिण्यकाशीपतिमदनरिपून्मादसम्पादकश्री-
कान्ताऽऽक्रान्तालकास्ये दिशसुखमव पम्पाऽम्ब शोणाम्वुजश्रीः ॥ १०६ ॥

इति श्रीविनमदमरवरनिकरमौलिमणिप्रभापटलपाटलपरशिवपदार-
विन्दस्यन्ददमन्दकृपारसमरन्दझरीपरितृप्तिमदुरेन्दिन्दिरायमान-
मानससरसकविताकुतुकाकलितपर्वतसुधीविरचिते
करडीशचरितामृतचम्पूप्रबन्धे षष्ठः स्तबकः ॥



॥ श्रीरस्तु, श्रीरस्तु, श्रीरस्तु ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

॥ शम्भो ! प्रसीद ॥

# सप्तमः स्तबकः

उमा-कलित-वामाऽङ्ग-[1]मुमाऽऽकलित-[1]विग्रहम् ।
समान-रहितं संशं । स-मान-महिमं भजे ॥ १ ॥

स हि मिहिर-सु-तेजः पुञ्ज-संरञ्जमान-
स्तुहिन-कर-यशःश्री राजसंराजितस्तत् ।
मुखजलरुपचेतः कैरवावार-वृन्दं
विकचमज-नितान्तं सत्सरो सत्सरःसु ॥ २ ॥

इति वितत-प्रभाव-भास्वरे करडीश्वरे तत्तेजः सहमान-मानसाः कुपात्रदानवाः सद्धर्म-कार्यवृन्दे मन्देह केचिन्नीचाः सम्भूय चाऽम्भोरुह-प्रिय-मार्ग-निरोधन-साधन-सन्दोहा मन्दोहा इव तस्य लोकबान्धवस्य सत्पथ-प्रवर्तनं निवर्तयितु-कामास्तामसाः कामपि दुष्क्रियां चिन्तयन्तो विपणिमुपगत-क्रयिक-प्रकरं यावत्तण्डुलराशिमहमहमिकया विलम्बित-मादाय मोदान्वितस्तस्य करडीश्वरस्य नित्यसमाराधनकृते मुष्टिपरि-मिता प्राप्तिर्यथा भवति तथाऽऽरचय्य, "श्वः कथं करिष्यति पश्याम" इति परस्परं भृशं रसन्तोऽधर्मायाऽत्र संतोष-सन्तोष्य सन्तो वसन्ति स्म ॥ ३ ॥

तदा तु स वदान्यकशिवपदारविन्दं स्मरन्
सदा विनमदा पदावलिभिदातिधौरेयकम् ।
ददाति जगदादिमोऽखिलनिदानमीशः कुधी-
मदाविलमदापहस्त्विति मदाग्रहानावसत् ॥ ४ ॥

---

[1] वैभवम् 'ख' पुस्तके ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



तदानीमेव–
इदानीं तण्डुल–व्रातं । स दास्यति शिवस्त्विति ।
मुदा कुमारः कालज्ञ । श्चिदा मत्वाऽऽपणे स्थितः ॥ ५ ॥

कश्चिन्निश्चलधी शिवाङ्कनकनत्कायो न पायो महा-
देवश्रेष्ठसुनामभागनुपम–श्रेयोनिकायोज्वलः
तस्मिन्नेव दिने सुतण्डुललसद्भाण्ड-प्रकाण्डाङ्कित-
त्रिंशत्सच्छकटान्वितः पुरमगाद् धीरो गभीरो वणिक् ॥ ६ ॥

सकला सकलावलीढकायं विकलास्तं वणिजो निरीक्ष्य[1]माणाः ।
गदिता हृदि तद्विबोधहानाद्विदितोऽस्माभिरयं न कुत्र देशे ॥ ७ ॥

स वणिग् वणिगाकार- । च्छन्नः पन्नग-भूषणः ।
महादेवश्रेष्ठ इत्या– । ख्यान्वर्थाऽखिलतत्प्रभो ॥ ८ ॥

महादेव इति श्रेष्ठ । इत्यर्थो वणिजस्फुटः
महादेवश्च देवेषु । श्रेष्ठ इत्यन्वयः पृथक् ॥ ९ ॥

अवधारणाप्राक्षक्ष– । कर्म धारयतोऽपि वा ।
विशेषणोत्तरपद– । कर्मधारयतश्च वा ॥ १० ॥

तदा, तदागमनमुद्वीक्ष्य, "मुदाऽमूल्यं ब्रूहि; सत्यापनं ग्रहाण, भवता यथा कथ्यते तथैव गृह्णीमो"; "मदापणं मदापणमायाह्यायाहि, मह्यं मह्यं मह्यमित्यसह्यं भृशं क्लेशतः क्रोशतः कीशशतसमान-मान–मानवकुमानवान् प्रायशः कायिक–जनाननार्कणितवन् मनागप्यनालोक–यन्ननादृत्य "घनायने करडीशाऽऽपणः कुत्र कुत्रे"ति शश्वद् घुष्यमाणा काचन जगज्जन्मादिनिदानं सदानन्दमयमूर्तिर्धेनुस्तरणकमिव सूचकाऽयस्कान्तोपलमिव परिगलिताऽन्य–विषयभ्रमा मुनिजन–मनोवृत्तिः सत्–

[1] मूढा 'ख' पुस्तके ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



पथमिव करडीशमेवाऽवगन्तुं सत्वरमागत्य, हंसेन कमलाकरमिव कमला-
करममलात्मक–मरिबसव–कुमारेण समलङ्कृतमापणं सरभसं रुजुतया
सह सकल-शकटनिकरैर्जवादवाप स वामदेवः ॥ ११ ॥

आकर्ण्य वृत्तान्तमिमं समोद–
मोक–स्थितो द्राक् करडीश्वरोऽसौ ।
साकं गणैरायणमाजगाम
श्रीकण्ठ–भक्तावलिपूर्णपार्श्वः ॥ १२ ॥

विलोक्य चैत्रागम–पुष्यमाणैर्
दलत्प्रसूनैश्च दलैः फलैश्च ।
अलङ्कृतं सद्वनवच्च तेनो–
ज्ववं ननन्दाऽऽपणमात्त-भागम् ॥ १३ ॥

साऽऽत्मजः करडीशोऽयं । ववन्द वणिजां वरम् ।
ससम्भ्रमोक्ति–व्याजेना– । वञ्चयत् प्रतिवन्दनम् ॥ १४ ॥

प्रतिवन्दनतो भक्त– । भारःस्यादिति योचयन् ।
तयोः प्रीत्यैव देवस्त– । च्चकार करुणा-निधिः ॥ १५ ॥

आकलय्य वणिगीशमागतं
लोकबन्धुमिह [1]कर्म–साक्षिणम् ।
सारसत्त्व–करडीश–सन्मनः–
सारसंविकसितं श्रियाचितम् ॥ १६ ॥
करुणार्णव एव वर्तकः
शरणं भक्ति–कलानिधि परम् ।
सविधे ववृधे समीक्ष्य तं
विविधाऽञ्चद्भुवनाऽऽवृतोदरः ॥ १७ ॥

---

1 कर्म "ख" पुस्तकेऽधिकः पाठः

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



सदा लिङ्गार्चां तापस-रविसरद्ध्यान-भरिते
मनस्यन्याऽऽसक्तिभ्रम-विरहिते शान्ति- कलिते ।
पयोधौ निष्पन्दे प्रतिफलित-शितांशुरिव यः-
स्फुरत्यन्तर्देवः स इव पुरतो भाति हि महान् ॥ १८ ॥

इति कौतुक-कल्लोल- । मालाऽऽमोद-सुधाऽम्बुधौ ।
करडीश-मनो-हंसः । क्रीडा-कौशलमभ्यसत् ॥ १९ ॥

इदं किमासीदिति दुर्व्यथावद्-
ध्यदस्तदा जाल्मजना धनाऽऽढ्याः ।
यदाहितं कार्यमदात्क्षति चे-
त्युदाहृतामुक्तमदा रुदन्तः ॥ २० ॥

दुःखं परसौख्यं परतुष्टिः कष्टं हि परधनं दैन्यम् ।
येषां तेषामेषां दोषा भाषातिगास्तु केषां न ॥ २१ ॥

नीचावली कुपथचङ्क्रमणाक्रमा दुर्-
धीचातुरीविरचितं चरितं त्वसारम् ।
वाचामगोचरकनत्करडीशभव्य-
श्रीचारुभक्ति-महिमोन्नतिहेतुरासीत् ॥ २२ ॥

संमर्दनं साधु-जने खलानां
तत्सद्गुणोत्सेधन-साधनं हि ।
श्रीखण्ड-संघर्षणतः समन्ता-
दामोद-भूमोदय एव भूयः ॥ २३ ॥

आक्षिप्तोऽपि बलात्खलैः किल महान्नैतस्य नैसर्गिकी
तेजः कीर्तिपरोपकृत्युचितधी सम्पद् विलुम्पत्यसौ ।
आक्रान्तक्षणिकग्रहार्क-शशिनोस्तेजः प्रसारे पुनः
पद्मेन्दीवर मोषणादिमविधौ भयादपायश्च किम् ? ॥ २४ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



क्रूराहितं सत्परिपीड़नं तत्
सारायतां चन्महसां निदानम् ।
शाणोपलोत्कर्षणतो मणेर-
क्षीणो हि तेजः प्रसरः प्रसारः ॥ २५ ॥

परकृत-परितापः सक्षमाणां सतां सु-
स्थिरतर-शिशिरश्रीसारसम्पत्ति-बीजम् ।
खरतरतपनत्वाभूमिरत्यन्तवर्षैः
किरदुरुजड़िमाऽञ्चत्सस्य-पुष्पादिमश्रीः ॥ २६ ॥

एव खल-जनाऽऽक्षेपाद् । भावनीय-गुणावलिः ।
देवेन करडीशस्य । त्वाविरासीन्महामहः ॥ २७ ॥

तदा, सदा सदासन्निवर्तकसत्पथ-प्रवर्तक-चूड़ामणिश्चन्द्रचूडा-मणिः शकट-नियन्तृ-रूपधरैः कुलधराधरक्रीड़ासमुत्क्षेपणचणैः प्रमथ-गणाः शकट-तण्डुला मन्त्राण्यायाऽऽपणे स्थापनं त्वक्षयनिधेरिवाऽक्ष-निमील्योन्मिलनान्तरा चरद्भिः परिरञ्जितः करडीश्वरप्रार्थितः, तैः समस्तैः समं समापन्न-बहुरूप-निज-वृषेन्द्रायमानधौरेय-शाकट- वृष-पुङ्गवैश्च साकं भूकम्पन-कर-चक्रगतिशकट-चक्रकैः सह सक्रीडं प्रतोल्यामुभयथा करडीशकरं गृहीत्वा, लोकैः स कौतुकमवलोकमानः शिवलोकमिव सर्वोत्तमशिवाधिष्ठानं, वैकुण्ठमिव सदाऽच्युत-श्री-समलं-कृतं, सत्यलोकमिव सकलविधि-चतुरसुवाग्विलास-प्रचार-चारुतरं, त्रिदिनमिव सर्वसुपर्वाऽऽश्रयं, विपिनमिव विविध-विचारमण्ड़ितं, केदार-मिव विराजदामोदशालिवैभवं, भास्वत्प्रभावमयि निरन्तर-सोमकला-विलास-लालित्यं, विबुधजन-विनोदाऽऽस्पदमपि दानव-प्रभाव, सुमनो-जन-सन्तान-विश्रान्ति-सुखंकर-बहुलशालमपि विशालं मरिस्वामि-शिवयोगीन्द्रमठं प्राप, पाप-ताप-लोपः श्रीपरोपः ॥ २८ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



तत्राऽखिलं वस्तु-चयं निधाय
बध्वा वृषेन्द्रान् किल पङ्क्तिशस्तान् ।
सुदूर-मार्गाऽऽगमन-श्रमीव
[1]स्पष्टं हि[1] विश्रान्ति-सुखं च विन्दत् ॥ २९ ॥

ततः क्षणं श्रीकरडीश साक्षा-
न्निरीक्षणाऽऽनन्द-भरान्वितान्तम् ।
जनिष्यमाणाक्षि-निमीलनं स
स्वाप-च्छलेनाऽन्यथयांचकार ॥ ३० ॥

अथ, पुनर्निखिलभुवनाऽऽक्रान्त-[2]ध्वान्त[2]-निचय- तस्करे भास्करे सदिन्द्र-कला-निधि-वसु-प्रसराऽपहर्त्वादात्मनि सकल-धर्माऽधर्म-निरीक्षण-परीक्षण-निदान-मूर्तेस्त्र्यक्षस्य वणिजस्समक्षं स्थातुमक्षमतयेव सुदूरं चरम-धराधरे तिरोहिते तदा सदानन्द-कर-करप्रकरैः करडीशः सुकर-कीर्ति-निकरैः सुमनसां मनांसीव कुमुद-समुदय-मुकुल-निकुरुम्ब-मुल्लासयन्, पञ्चकमुखानीव पङ्कज-सङ्कुलं सङ्कोचयन्, प्रसृमर-तदीय-भक्तिरस-झर्याचरनिकरमिव चञ्चच्चन्द्रिकया चकोर-सन्तति सन्तर्पयन्, विमलतर-तदीय-गुणगणैर्नयवज्जनुनयनाऽञ्चला-नीव निजोपलान् कलाकुलेन स्यन्दयन्निन्दुरुदय-गिरेः कन्दरं सुन्दरम-विन्दत ॥ ३१ ॥

स्वाभावे समयं निजप्रियवधू नीलाब्जिनी दुर्दशां
वीक्ष्येयं नलिनी स्मिताम्बुज-मुखीत्येषोऽतिरोषाऽरुणः ।
आगम्याशु तदम्बुजाऽऽस्य-वनिता-वक्त्रोपमा-सम्पदं
चाऽऽकृष्यात्मनि सन्निधाय च करै राजाविराजत्यलम् ॥ ३२ ॥

---

1 तूष्णीं सु "ख" पुस्तके पाठान्तरं
2 "ध्वान्त" इत्यधिकः पाठः 'ग' पुस्तके ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


पश्यन्ननाथ-ललना-ज्वलने वियोग-
जन्ये क्षिपन्निज-करैर्नव-चन्द्रिकाज्यम् ।
उत्सेधयंस्तदबलाजन-तापनोत्थं
पापं निधौ परिणतं ह्यभवत् कलङ्कः ॥ ३३ ॥

मित्राहितो भुवन-जात-विशोषकारी
दोषाकरोऽयमिति मां वदतीति लोकः ।
लज्जाऽन्वितोंऽशुक-परीत-तनुर्दिवा न
नक्तं विधुर्भ्रमति नो यदि नैकषेयः ॥ ३४ ॥

कृत्वाऽनिशं सुमनसां वसुभिः सुतृप्ति
पङ्क-स्थितेषु जड़जेषु तु भूरि-तापम् ।
शिष्टावनेन किल दुष्ट-सुशासनेन
राजीति सीत-किरणः किल कीर्तितोऽभूत् ॥ ३५ ॥

दत्वा वसु-व्रजमसो विबुधाऽऽवलीनां
क्षीणो विधुः सपदि पूर्णतरो न भूयः ।
तस्मात् सदा सदुपकारकरा हि लोके
रिक्ताश्च सान्द्र-विभवाः प्रभवन्ति सत्यम् ॥ ३६ ॥

समस्तैर्लिङ्गाऽर्चां कलयितुमगारे सहचरैः
समं भास्वत् सद्वर्तक-निकर-चूड़ामणिममुम् ।
समन्तर्गत्वाऽयं विमल-करडीशोरुसुगुणो
समं प्रीतं चक्रे सपदि शनयो दार्ढ्य-गरिमा ॥ ३७ ॥

मरिबसवकुमारस्तूर्णमागत्य गेहे
परमगरिमलिङ्गाऽर्चार्ह-वस्तु-प्रतानम् ।
जल-सुम-फल-पत्राद्यं हि सज्यं स चक्रे
धनुरिव रिपु-वर्ग-ध्वंस-मूलं सलीलम् ॥ ३८ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



स च तत्करडीश्वरेण साकं सुचरित्रः सचरः समेत्य गेहम् ।
स्नपनादिकमारचय्य भास्वद्विमलार्चा-सदनं घनं विवेश ।। ३९ ।।

स्नात्वाऽथ करडीशोऽयं । साऽपत्यः प्रस्रयाऽन्वितः ।
आसाद्य निकटं तस्ये- । शाऽऽसन्न-वृषवद् बभौ ।। ४० ।।

अथ साऽङ्गं सर्वेषु लिङ्गाऽर्चनं कलयत्सु जगत्त्रय-त्रिकार्य-प्रवर्तः स वर्तकवरः शरणानां जित-करणानां गुणभरणानां भवोत्तरणानां दीनजनोद्धरणानां शिव-स्मरणानां सरणिरेव धरायां गरीयसीति प्रदर्शयितुं तथा चाऽथर्वण-शिखायाम् :-

"भ्रुवोर्मध्ये मम रूपं सहस्राब्ज-लिङ्गं स्थितं;
पश्चिमे शिखायां जङ्गमः शून्यः विश्वाऽनुग्राहको
जङ्गमः; जङ्गमस्य पदाम्बुना शिवलिङ्गस्य स्नपनं;
तत्प्रसादं भोजयेत् ।।"

जाबालोपनिषदि :-

"चरमीयं देवता दृश्यते, शेषो भुज्य, स परब्रह्मा
स्यात्; तच्छेषा(त्) तृप्तिर्न संशयः ।।"

स्कान्दे :-

चर एव स्वलिङ्गं च । शेषं लिङ्गे समर्पयेत् ।
चरेन्द्रिय-मुख-द्वारे । सदा सन्निहितः शिवः ।।"

शिव-रहस्ये :-

अनादिजङ्गमश्चैव । सादिलिङ्ग-स्थलं भवेत् ।
अनादेस्तु विरोधेन । त्विष्टोच्छिष्टं तु किल्बिषम् ।।"

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


शैवरत्नाकरे :–

"जङ्गमेन विना देवि ! । कर्माणि चरते यदि ।
स एष नरकं भुक्त्वा । पुनश्चण्डाल-वंशजः ॥"

लैङ्गचे :–

"क्षीरकुम्भ-सहस्राणि । घृतकुम्भ-शतानि च ।
विनाऽर्पयेच्चरोच्छिष्ट- । मिष्टलिङ्गे नहि प्रिये ॥"

स्कान्दे :–

"लिङ्गस्य चेतनं कृत्वा । जङ्गमस्य प्रसादतः ।
चरोच्छिष्टं विना वत्स ! । न च लिङ्गं न च क्रिया ॥

चरोच्छिष्टेन मां कोऽपि । विना हि भजते यदि ।
नाऽस्ति तस्य विनिर्मोक्षः । संसारे जन्म-कोटिभिः ॥"

वीरागमे :–

"प्रसादं शिवलिङ्गस्य । न सन्देहात् समर्पयेत् ।
जाराच्च जन्म भवति । विदुः प्राज्ञा नरोत्तमाः ॥"

ब्रह्माण्ड-पुराणे :–

"चरमेव प्रशंसन्ति । तच्छेषाऽन्नस्य भोजनात् ।
सायुज्य-पदवी देवि ! । मम वाक्याद् भवेद् नृणाम् ॥"

पारमेश्वरागमे :–

"ताप-त्रयाणां च मल-त्रयाणां
गुण-त्रयाणां विहृति-प्रभावम् ।
प्रसाद-लेपं च पुनश्चरस्य
लिङ्गे च दत्वा शरणः प्रभुंक्ते ॥"

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



इत्यादि-प्रामाणिक-स्वप्रणीत-प्रमाण-वचन-निचये संस्कृतानां वीरशैवानां श्रद्धामुत्पादयितुं च साकारतया पश्चिम-शिखायाश्च बहिरागत्य, स्वेन साक समागत-निरञ्जन-जङ्गम-पादपूजा-समारम्भ-मारम्भयंस्तत्र करडीशं नियुज्य, तस्य हस्ते तत्समुचित-वस्तु-सामग्री समर्पणे स्वयं प्रयुक्तः शतरुद्रीय-रुद्रैकादशनी-पुरुषसूक्त-प्रमुख-महामन्त्र-प्रवचने तान् सहचरान् आदिश्य, घण्टा-शङ्ख-प्रमुख-सुनादैरनादि-जङ्गम-मङ्गलमय-तुङ्गतर-पूजामहोत्सवं समाप्य, तदीय-चरणाऽर-विन्द-स्यन्दन्मरन्दधारावद् राराजित-पादोदकं चिरागत-शास्त्रीय-विधिवल्लिङ्गाऽभिषेचन-पूर्वकं करडीशेन तैः सहचरैः मरिबसवकुमारेण च समं क्रमेण समास्वाद्य, ततस्तथैव नीलाम्बिका-बसवलिङ्गाम्बाभ्यां च दापयन्, शरण-सदाचारं स्थापयन्, समेषामानन्दं प्रापयन्, तथ्यमालापयन्, निजसमयमुद्दीपयन्, ज्ञान-क्रिया-समुपस्कृत-शरण-गणाऽऽचारस्य प्रसादान्तत्वात् सभक्ति सानुमोदं साष्टाङ्ग-प्रणाम-पूर्वकं निवेद्यमान-तन्निरञ्जन-जङ्गम-प्रसादं समन्तैः समासाद्य, यथा-विधि लिङ्गे समर्प्य, करडीश-भक्ति-सुधारस-विलोडन-समधिगत-मधुरिमाधरित-सुरतरु-फलविसर-विसरद्-रससारं तत्प्रसादं सर्वैः समं प्रतिकवलं किं सममनेनेति शंसमानः प्रभूत-प्रमद-स्वभूः प्रभुरभुञ्जत ॥ ४१ ॥

ततः कुमारेण समर्प्यमाणं
कर्पूरचूर्णाऽनुगतं नितान्तम् ।
एला-लवङ्गादिभिरात्त-गन्धं
ताम्बूलमादत्त स वर्तकेशः ॥ ४२ ॥

तेभ्यः सहचरेभ्यः स । ददौ ताम्बूलमादरात् ।
करडीशवदामोद- । रागदं सन्मुखालये ॥ ४३ ॥

अयमेव महीयसां महीया-
न्महतां भक्तिमतां स सुपन्थाः ।
इति तं करडीश्वरं सुरागा-
न्निगदंस्तं जगदादिमः शशंस ॥ ४४ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



ततस्तण्डुल-मौल्यं किं । किमित्येवं पुनः पुनः ।
करडीश-समापृष्टोऽ- । त्यनाऽऽकर्णितवत् प्रभुः ॥ ४५ ॥

"अयमेव सुपन्था हि । सदाचार-पदा सदा" ।
इति शंसा-प्रपञ्चेन । प्रतारयदतः परम् ॥ ४६ ॥

पृष्टः पुनः पुनस्तेनो- । त्कृष्टं तुष्ट-मनाः सदा ।
स्पष्टं प्रातर्भवेदित्या- । चष्टे शिष्टावलीष्टकृत् ॥ ४७ ॥

इत्यादिश्य महान् पञ्च । कृत्याऽधीशः स वर्तकेट् ।
अत्यामोद-वचोभिस्त- । त्र्यत्यान् सर्वानतोषयत् ॥ ४८ ॥

ततः सहचराऽनीकाऽ- । न्वितः स वणिजां वरः ।
स्तुतः समस्त-भुवने- । गतः सपदि तन्मठम् ॥ ४९ ॥

करडीशः समं स्वश्री- । करं योगि-मठं गतः ।
करणीय-कृदाचाराऽऽ- । कर-कान्त-कलेवरः ॥ ५० ॥

तनयेनाऽऽत्म-कुल-के- । तन-भूतेन संयुतः ।
घन-शान्ति-रसेनाऽऽप- । घनभाजेव राजता ॥ ५१ ॥

सदनं तदवाप्य स्वं । सदनन्त-सुख-प्रदः ।
सदय-श्रित-सन्दोह- । सदय-प्रद-वर्तनः ॥ ५२ ॥

सदार-तनयादिः सं । सदारचित-कीर्तनः ।
सदाऽऽनन्देन सुष्वाप । स दानगुण-सागरः ॥ ५३ ॥

स्वापापदेशेन वणिग्- । रूपाऽभव-निदर्शनात् ।
प्रापाऽऽनन्दात् पारवश्यं । व्यापारं बाह्यमुत्सृजन् ॥ ५४ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


अताऽनवद्यं करडीश्वरस्य
प्रातर्महत् तं किल पश्यतेति ।
जनानिवाद्बोधयितुं प्रवृत्ता-
श्चकूजुरुच्चैर्ध्वनि-ताम्रचूडा ॥ ५५ ॥

संफुल्लाब्ज-सरो-मरन्द-सलिले स्नानः पुनः सादरं
तद्धूली-पटवास-धूसर-निजाऽऽभ्र्भोगोऽनुरागोदये ।
सन्नृत्यन्नलिनी-नटी-विततिसंरुद्धातिवेगाऽऽतुरः
स्पर्शाऽऽनन्द-विधायको नव-मरुद् वाति स्म सोऽतिप्रियः ॥ ५६ ॥

अरुणकिरणजाल-प्रस्फुरद्रोचिराली
विकच-कमल-कोशाभ्यन्तरालेषु रेजे ।
उषसि गमित-लक्ष्म्या पद्मिनां राजधानी
स्फुटजलज-गृहेषूद्दीपयद्दीपमाला ॥ ५७ ॥

विकासभाक् पङ्कज-कोशगर्भ-सं-
स्फुरन्मरन्दाम्बुझरी गरीयसी ।
रराज बुद्धाम्बुजनी सरोरुहाऽऽ-
ननात्त-गण्डूष-सुगन्धि-तोयवत् ॥ ५८ ॥

समय एव जयाऽपजयं सदा
कलयतीति हि देहभृतां क्षितौ ।
प्रकटयन्निव पद्म-चयो स्फुरद्-
गलित-कैरव-कान्ति किलोषसी ॥ ५९ ॥

ततः, सकल-जगद्-व्यापार-परम्परा-निरोधक-कालैन्द्रजालिकाऽतिप्रक्षिप्त-नीलकान्तिमूलिका-चूर्णवन्निबिडतर-निखिल-जन्तुजाल-विलोचन-तिरस्करणे तमच्छटा-समूल-समुत्क्षेपण-चण-किरण-गणेऽम्बर-रमणो गुणाऽऽकर-करडीश-मनोरथमापूर्य, सत्वरं केनाऽप्यदृष्टः केन

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



पथा स वर्तक-प्रवरः कुत्र गच्छति वेत्यात्मनो जगच्चक्षुस्त्वात् कर्म-साक्षित्वादहं धरा-धर-शिखरमारुह्य, द्रक्ष्यामीति तद्दिदृक्षयेवा चर-माऽचलमधिरोहति करडीश्वरे प्रातः कर्म समाप्य, तत्तण्डुलराशि-मूल्यधनमादाय, भृत्य-स्कन्धेष्वारोप्य, सतनयः सद्भक्तस्तन्मठमागत्य, विचार्यमाणे स चाऽर्यस्त्वतर्क्य-महिमः सर्व-मङ्गलस्य वृषपुङ्गवस्य वर्तकवरस्य परिवारः प्रथममेव प्रथमान निरवधि करडीशशिवधर्मसिन्धुं निर्मन्थ्य सदाचारमन्दरेण तेन समुत्थितेन सुगुण सुरमणिना वितरण-कल्पतरुणा दया-काम-दुघया यशश्चन्द्रेण सद्भक्तिसुधया श्रद्धाश्रिया देवता सार्वभौमस्तस्मान्मौलादपि कोटिगुणाधिकं सन्तुष्टस्तत्रान्तरे ख्यातो यातो भूतो भूतेश्वरः ॥ ६० ॥

आर्यो नाऽस्ति; न सन्ति ते सहचरा; मान्या न ते सद्वृषाः;
सा नो सच्छकटाऽऽवलिः; किमिदमित्याश्चर्य-पाथो विधौ ।
मग्नं श्रीकरडीश्वरस्य हृदयं सद्भक्त-सघस्य सं-
तोषाच्छा कुजनावलेस्तु सुतरामाधौ पयोधौ तथा ॥ ६१ ॥

मार्गे समन्ताच्छकटालि-चक्र-
चक्रंषदंकाल्यपि नैव भाति ।
सर्वो जनो वीक्ष्य वणिग्वरं तं
समागतं "शङ्कर" इत्यबोधि ॥ ६२ ॥

तत्रत्याय मरीश्वरामलमहायोगीन्द्र-चन्द्राय तत्
पादाब्जाऽऽनति-पूर्वकं शिवकृपा-संपत्ति-संपादकम् ।
विज्ञाप्याऽथ पुरा च देव-विदितं चाऽऽनन्द-पूराऽमृत-
स्यन्दोत्कूल-मनो-हृदं तमतनोद् भक्तः स सूक्ति-व्रजैः ॥ ६३ ॥

तदा योगीन्द्रस्तं सपदि करडीशं निज-कृपा-
कटाक्षांशु-ज्योत्स्ना-स्नपितमपि तं सूनृत-गणैः ।
सुधासारैः सिक्त्वा निजपदसरोजालि-भजक-
प्रतानाङ्गे रोमोद्गम-जनकमूचेऽद्भुत-वचः ॥ ६४ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



श्रीकान्त-नेत्राऽऽकलिताऽङ्घ्रि-देशं
श्रीराजराजाश्रित-पादपीठम् ।
श्रीराजमौलि करडीश-भक्ति
श्रीरद्भुतं वर्तकतां निनाय ॥ ६५ ॥

करडीश-भक्तिरस्मिश्शरणाऽमरधेनुमाचकर्ष मृडं ।
मुरहर-विधि-मुख-मृग्यः पुरमथनोऽसौ न चेत् कथं प्राप्तः ? ॥ ६६ ॥

पुरा हरः सुन्दर-सद्गणेन्द्र-
श्चैवोऽभवत् सच्चरतामवाप ।
पिष्टाऽम्बिकायाः करडीश-भक्त्या
भजत्वरं तण्डुल-वर्तकत्वम् ॥ ६७ ॥

तदाकर्ण्य तदा श्लाघ्यं । मुदा योगीन्द्र-भाषितम् ।
सदालि-संसदा चक्रे । यदार्य-जन-संमतम् ॥ ६८ ॥

कृताऽन्तरायोऽपि मताऽन्तर-स्थैर्-
नताऽन्तराऽघः करडीश्वरोऽसौ ।
नितान्त-रक्तचर-तर्पणे स-
न्नुतान्तरङ्गं दृढिमा ललम्बे ॥ ६९ ॥

कुर्वन्ति कर्म किमपीह न वैकनिष्ठाः
कुर्वन्त एव पुरतो विरमन्ति मध्याः ।
सन्तो दुरन्त-दुरपाय-दुरन्तराये-
प्वन्तः प्रशान्ति-कलिता कलयन्ति कार्यम् ॥ ७० ॥

ये भक्ति-शील-भरिताश्चरितानवद्याः,
ये दान्ति-शान्ति-कलिताः कलि-ताप-नाशाः ।
तेषां निविष्ट-मनसां घन-साहसानां
शम्भुः सदा किल ददाति मुदाऽति-काम्यम् ॥ ७१ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


फलं रसालं समयश्च माधवः
कुजश्चरं भा कुसुमं हि मल्लिका ।
शिवो हि दैवं सदयो मतं च चित्-
क्रियाऽवलम्बं शरणैश्चिराऽऽदृतम् ॥ ७२ ॥

आलोक्य करडीशस्य । भक्त्या प्रीतोऽभवन्मृडः ।
स्व-प्रियस्य पदार्थस्य । प्राप्तौ को न हि तुष्यति ॥ ७३ ॥

प्राग्वैरकारि-कुजनाः स्व-जनायिताः सं-
त्यक्ताऽभिमान-कुधियः सुधियः प्रभूय ।
क्षन्तव्यमद्य भवता भव-ताप-नाशिन् !
नागः कृतं च सुधियाऽभ्युदयाऽम्बु-राशि ॥ ७४ ॥

इत्थ निगद्य करडीश-दरस्मिताऽऽभाः
सच्चन्द्रिका-प्रसरणाऽपगतोपतापाः ।
सम्फुल्ल-चित्त-कुमुदाऽभ्युदिता निवार्य
मोदाः प्रकाममनमन्विनमन्मरुद्रुम् ॥ ७५ ॥

मत्ता वित्तलवेन निर्मल-पथा चाराऽतिदूराशयाः
शुम्भच्छम्भुमताऽमिताऽच्छमपि मा ज्ञानार्थ-दीना वयम् ।
द्रोह-व्यूह-समार्जनाऽति-निपुणाः क्लेशादि-पाशार्दिताः
कान्ताऽनन्त-गुणाऽम्बुधे गणय मा मन्तुं न कन्तु-स्मर ! ॥ ७६ ॥

खलाऽतिसख्यादपि सत्सु मत्तरो
वरस्त्विति प्राग् गदितं हि तत्प्रियम् ।
भवद्विरोधेन स वर्तकत्वभा-
ग्घरः परः सम्प्रति दृक्पथाऽतिथिः ॥ ७७ ॥

इति सकलजनैः संकीर्त्यमान-प्रभावः
सफल-शिवकृपां सञ्चिन्तयन्नन्तरङ्गे ।
सगुणभरित-भक्तः सात्मजः सद्म-सारं
सरसिजमिव हंसः सञ्जगामाऽञ्जसा स्वम् ॥ ७८ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



ततः, सकल-जनैर्गदन्तं तमिममुदन्तं निशम्य, वदन्तः परस्परं सदन्तःकरणामुदन्तामुद्वहतोऽक्ष-दर्शकमुखास्ताम्र-मुखाश्चाऽधिकृता राजपुरुषाः, तस्य करडीशस्याऽनितर-साधारण-महिमाऽतिशयेन विस्मय-मानसास्तस्मिन्नाऽऽदरं वर धरन्तश्चिरं तस्य निरन्तरं परोपकार-कृतौ कस्याऽप्यातङ्को मा भूयादस्मद् योग्यताऽनुसारं सहायः कर्तव्यः, इत्यालोच्य, नूतनं भू विक्रय-प्रक्रममुपक्रम्य, तत्रेतर-विक्रेतृ-धनिक-जनाननादृत्य, किञ्चन्मौल्येनैव तस्मै करडीशाय व्रैहीय-शालेय यव्य-मौद्गीनादि-सुक्षेत्र-समुदयं धान्य-समृद्धि-समुदय-समर्थं दिशन्तो भृशं तस्य तेषु स्वातन्त्र्यमनीनयन् घनीभवत्सु नीतितो मनीषिणः ।। ७९ ।।

तत्र, कश्चिद् गिरि-कान्तार-निकराऽधि-कारभागधिकृतः सादरं सदा सकलाऽमित-जन्तु-सन्तर्पण-कृते समिन्धन-समृद्धिरावश्यकी तत्-सहायोऽपि महायोग्य इति मत्वा, यथाक्रमं किञ्चिद् राज-देय-द्रव्यमादाय, सुमानः समान-रहित-कुमारस्वामि-क्षमाधर-परिसरे "रामन-मलि" इति कर्णाट-भाषया व्यवह्रियमाण-तत्कान्तार-प्रान्ताऽऽक्रान्त-तरुगुल्मसन्तान-निरन्तराऽधिपत्ये तस्मै करडीश्वराय स्वतन्त्रतामदान्मुदा तदा सदा समुदार-धीः ।। ८० ।।

इत्थं हूण-नृपा अपि प्रतिदिनं सान्द्राऽनुरागाः परं
यद् यत् तद् गदितं तदेव सुतरां सद्राजधर्मायनम् ।
इत्यालोच्य धिया भिया विदधिरे कर्माऽखिलं चेति यत्
सोऽयं शम्भु-कृपा वितर्तयिति ते विन्दन्नमन्दन् बुधाः ।। ८१ ।।

शीलमेव हि सदाऽखिलः श्रियां
मूलमुन्नति-करं सुराग-भूः ।
नील-लोहित-कृपा-रस-स्थिते-
रालवालमगजाल-चालनम् ।। ८२ ।।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


अत्राऽहिताः किल हिताः प्रभवन्त्यसाध्यं
साध्यं हि भाव्य-शुभमाशु शुभत्वमेति ।
वेद्यं त्ववेद्यमपि तर्क्यमतर्क्यमेवं
यस्याऽस्ति शीलमखिलेप्सित-दिव्य-धेनुः ॥ ८३ ॥

जृम्भन्निर्मल-शीलसेवधिरसौ श्रीशर्करा-वंश-सात्
केतुश्रीकरडीश्वरो निरुपमाऽऽनन्दो ह्यमन्दोत्सवः ।
निर्विघ्नो निरुपप्लवो निखिल-सन्निर्व्याज-बन्धुर्निराऽऽ-
तङ्को नित्य-चणाऽर्चनोत्सव-विधौ रेमेऽतिकामे न सः ॥ ८४ ॥

शुम्भादि-दुष्ट-सुमनो-द्विषदावली दुर्
दम्भार्दनाऽद्भुत-कले ! कलयाऽम्बिके ! माम् ।
जम्भाऽहिता-ऽज-हरि-मुख्य-सुरेन्द्र-संसत्-
सम्भाविताऽङ्घ्रि-कमले ! श्रम-लेश-रिक्तम् ॥ ८५ ॥

इति श्रीविनमदमरवरनिकरमौलिमणिप्रभापटलपाटलपरशिवपदार-
विन्दस्यन्ददमन्दकृपारसमरन्दझरीपरितृप्तिमदुरेन्दिन्दिरायमान-
मानससरसकविताकुतुकाकलितपर्वतसुधीविरचिते
करडीशचरितामृतचम्पूप्रबन्धे सप्तमः स्तबकः ॥



॥ श्रीरस्तु, श्रीरस्तु, श्रीरस्तु ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

।। शम्भो ! प्रसीद ।।

# अष्टमः स्तबकः

शङ्करं नमदापन्ना- । शं-करं किङ्करेष्टदम् ।
शङ्काऽऽरम्भ-हरं वीताऽऽ- । शं कारुण्य-निधिं भजे ।। १ ।।

अथ परतर-दिव्य-प्राभवः श्रीभवानी-
धव-नव-करुणा सम्प्राप्तनं दीप्त-तेजा। ।
घनतर-धन-कार्य-भ्राजदुद्राजकीया
यतकृतिकलनाङ्गीकारसुस्फार-धीः सः ।। २ ।।

तन्त्री-स्तम्भ-स्थापनोद्यत्क्रियां स-
तामङ्गीकृत्वा राज-पुम्भिः प्रभूतम् ।
दत्तं वित्तं तत्कृते सत्कृतस्तै-
र्मोदादादायाऽऽशु तामारम्भे ।। ३ ।।

स्तम्भा निकामगुरुदीर्घतरा धराया-
मन्तः प्रक्लृप्त-परिमाण-पदं विहाय ।
तूष्णीमुपर्युपरि शम्भु-कृपा-बलात् ते
तेनाऽचिरान्निदधिरेऽप्यकुतो भये न ।। ४ ।।

इत्थं जवेन धरणौ शरणास्तथा तौ
स्तम्भ-स्थितिं सुभृतकैः किल कारयित्वा ।
तेभ्यो भृतिं बहु ददन् परिकीर्तितस्तै-
र्निवर्त्य तत्कृतिमसौ स्थलमध्युवास ।। ५ ।।

ततस्तु जाल्मा हि मतान्तरं-स्था
नितान्त-वैषम्य-युत-स्वभावाः ।
कृतघ्नता-क्रौर्य-रताऽऽशयं काः
कृतोपकारेष्वहितं यतन्त। ।। ६ ।।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



परोरुतेजो सहन-प्रवीणाः
पैशुन्य-पाण्डित्य-लसद्-रसज्ञाः ।
अन्योत्सव-ध्वंस-विधौ समर्था
वाचाटतास्याः परदूषणेषु ॥ ७ ॥

सतां यशःशल्य-गतान्तरङ्गाः
पर-प्रभावाऽग्नि-दहन्निजाऽङ्गाः ।
परोन्नति-प्रापित-मान-भङ्गाः
पराद्धि-सम्पत्ति-विपत्-तरङ्गाः ॥ ८ ॥

परगुण-परिपाटी-वर्णने कर्णमौना-
स्त्रिकरण-गुण-हीनाश्चोपकारे परेषाम् ।
सदभिमुखगतौ च स्वासनाऽभ्यास-नद्धा
वितरण-कलनायां वासनाशासनाशाः ॥ ९ ॥

विद्याविहीनाश्च वृथाऽभिमानाः
सन्त्यक्त-दानास्त्वघमादधानाः ।
विवेक-दीनाश्च कुधीनदीना
रागेण नानायन-वर्तमानाः ॥ १० ॥

एतादृशाः केचन दुर्विनीताः
संभूय सङ्क्रातमिदं हि साधु ।
सम्प्राप्तमेतद् गहनं दुरन्तं
तरत्यहो संप्रति दृश्यते च ॥ ११ ॥

निवेदयामोऽधिकृत-प्रतानें
विलोकयामः शरणस्य शक्तिम् ।
प्रत्यक्षभूतं प्रथिताऽपराधं
प्रतारयत्याशु कथं प्रपन्नम् ॥ १२ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


अथ सहन्त्यत्र तु राज-सेवा-
रता हि याथार्थ-युताः स्वधर्मे ।
जहन्ति किं ते किल राजकीया-
स्तातं प्रतीतं शरणाऽग्रगण्यम् ॥ १३ ॥

दम्भादयं दुस्तर-राज-शिक्षा-
पात्रं बभूवाऽत्र तु संशयः किम् ।
करोत्यजस्रं करणं यमित्थं
निकाममत्राऽकरणीयमेव ॥ १४ ॥

अत्राऽद्य को वा शरणं विपत्ति
रुणद्धि किं वै तदुदार-भक्तिः ।
श्रद्धाऽथवा स्वादुतरैतदन्ना-
दनातिमष्टाः किल जङ्गमौघाः ॥ १५ ॥

निर्वोढुमत्र किमपि प्रवलोपमस्मी-
त्यत्राऽपि कर्मणि घनाऽऽसि स प्रवृत्तः ।
पुष्पन्धयोऽहमिति षट्खरणः प्रजिघ्र-
न्नाम्पेय-पुष्पमुपजीवति किं विमोहात ॥ १६ ॥

इति सहासं स्पृहा-सङ्कुलित-धिया गलित-भयाश्चलित-नयास्ते सर्वे सम्भूय सामर्ष समधिकृत-राजपुरुष-सन्निधिं समेत्य, सहसा सविनयं समभिवन्द्य, तदीय-धवलतर-धौताम्बर-द्युति-ज्योत्स्ना-मुकुलित-कर-सारसाः सारसामहीना मही-नाभ-सदः-स्थाने पङ्क्तिशः स्थित्वा, करडीश्वरः शरणः शरणाऽऽगतोद्धरणः परवित्ताप-हरण-दूरी-कृताऽन्तःकरणस्तत्र भववत्करुणा-पात्रं घण्टा-पथोभय-पार्श्व-निभातव्य-तन्त्री-स्तम्भावद्द्रापित-बहुल-वित्त-व्यूहेषु किञ्चिदधन-व्ययं नैवोपर्यु-परि प्रस्थापयित्वा, शेषेणाऽप्यशेषेण द्रविण-व्यूहेन गेहान्यापूर्य, बक इव तूष्णीं स्वस्थः स्थितस्ते तन्त्रीस्तम्भास्त्विदानीमेव संचलन्ति पुरः

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



कतिपय-दिनान्युषित्वा, पतिष्यन्ति तथ्यमिदं भवन्त एव विलोकयन्तां लोकयन्तार इति महामहीद्रं मार्दवमुपनेतुमाक्रान्तो महा-हिम-निकर इव महा-महिम-निकरे करडीश्वरे कष्टमुत्कृष्टमुद्भावयन्तः शिष्टा इव दुष्टास्तुष्टाश्चेष्टाऽधिकृताऽऽशयास्पष्टमवदन् ॥ १७ ॥

आकर्ण्य ते खल-वचः किल सत्यमेत-
न्नो चेदनेक-दिवसैर्भवितव्यमेतत् ।
कार्यं कथं कतिपयैः कलितं दिनैश्चे-
त्युत्तर्क्यमाण-हृदयास्तदयाचयंश्च ॥ १८ ॥

तेषां तत्खल-वक्त्र-निर्गत-वचो-जालैर्लसत्कार-साऽऽ-
मोदं स्वच्छतरं चिरं घनरसाऽऽसाराऽभिपूराऽन्तरम् ।
चित्तं चारु सरो यथा हयरिमस्तोम-प्रपाताऽऽविलं
सक्षुब्धं सुतरां तदा समभवत्, प्राप प्रकोपं च तत् ॥ १९ ॥

किं कार्यमत्र च महानिति भूरि वित्तं
दत्तं समाचरितमित्थमनेन दौष्ट्यम् ।
का योचना समुचितेति दुरन्त-चिन्ता
सन्तान-तप्त-मनसः सुतरां न कुप्यम् ॥ २० ॥

तदानीं स दानीश्वरः करडीशः सद्धर्मनिदानं मुदा नव्य-तन्त्री-स्तम्भ-स्थापन-कार्य-समाप्ति-मावेदयितुं तत्पिशुनजन-वचन-निचय-समुन्मिषद्-रोषाऽन्ध-मनीषा-चेतनानां, अधिकृतानां राजपुरुषाणां निकटं विकटतमः समूह-समारब्धाऽखिल-जन्तुजाल-नयनेन्द्रिय-व्यापा-रस्य जगतः सूर्योदय-सूचक-चकदरुणोदय इव सकल-जन-मनस्तमः-समुदय-समुत्सारण-प्रवीण-महिमाऽर्क-द्युति-प्रतान-देदीप्यमान-स्यान्त-शान्तः परं दर-हसित-लसित-वदनः सरभस-मगादगाध-महिमाऽर्णवः ॥ २१ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



उपाविशन् स्मेर–मुखः सुखाऽश्रु–
प्राञ्चद्दृगन्तः करडीश्वरोऽसौ ।
तन्त्री–घन-स्तम्भ–कृतिः समाप्ता
भवन्नियुक्ताऽभवदित्यवादीत् ॥ २२ ॥

श्रीशम्भु-शुम्भत्-करुणाबलेन
साध्याऽप्यसाध्या मम सा बभूव ।
विलोकयन्तां किल वै भवन्तो
भृशं परार्थ–व्यसनोल्लसन्तः ॥ २३ ॥

भवत्–प्रणीत–क्रमवत्प्रतिष्ठा
जाता न वा प्रेक्ष्य च साधु यूयम् ।
तथेतरेषां किल राज-पुंसां
सन्दर्शिता चेत् विशदं हि सर्वम् ॥ २४ ॥

इति व्याहरन्तं श्रीहरं तं मनसि चिन्तयन्तं हृदय-हृद-गत–निष्कपटत्वं सविसर-विसरत्-कुल्यया वाचा परम–वञ्चकत्वा द्योतक–मन्दहासा भासा भासमान–मुख-विलासेन च पिशुनजन-वचन–निचय-विषशर–निकर–वर्षद्–रोषरसासार-प्रवाह–निरोधक-महासेतु – भूतेन किमिदमयं महानित्थं वदति किमत्राऽस्ति वा न जानीम इति सन्देह–सन्दोह-सन्दानित–मनस्कतया सञ्जनित–किञ्चिच्छान्ति–रसा राज–पुरुषा नाऽति–पुरुष-मिदमवदन् ॥ २५ ॥

मही-महीयानिति सत्य-वादी-
त्यवञ्चकश्चेति भृश गुणीति ।
परोपकारीति च भूरि वित्तं
दत्तं कु–वृत्तं किमिदं प्रवृत्तम् ॥ २६ ॥

लघुतर-दिवसैस्तत् स्तम्भ–संस्थापनोद्यत्
कृति-रति कथमासीच्चित्रमेतज्जगत्याम् ? ।
उपरि भुवि निमात-स्तम्भ-सङ्घः स्थिरत्वं
भजति कथमुपेक्षा हन्त कार्या त्वनार्या ॥ २७ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


राज-भीतिरपि नाऽस्ति चेद् वयं
राज-पुरुष-चयाकूचयांस्त्वमाम् ।
राजितार्थ-ततिरुत्क्षिपद्रजो-
राजिवच्चमरतोऽभवद् वृथा ॥ २८ ॥

वयं किं वक्षामा सदधिकृत्त-धुर्यहितभवत्-
परिश्लाघा-काले घनतर-जन-श्रेष्ठ इति च ।
परद्रव्यापेक्षा-रहित इति संकीर्त्य बहुधा
यदुक्तं तस्याऽर्थं कथय कथयामः कथमहो ॥ २९ ॥

राज-शिक्षा-भाजनं त्वं । महानपि वयं त्वपि ।
इत्थं कत्यवन्त्यत्र न । जानीमः पुरः स्थितिम् ॥ ३० ॥

अस्माकमित्थमपकीर्ति-समागमस्य
कालो भवान् सुचरणोक्तभवस्त्वसाधु- ।
वर्यांकोच-कुन्द-कुसुमावलि-मालिकेयम्
व्यालोऽभवत् खलु विधेः परिपाक एषः ॥ ३१ ॥

इति तेषु राज-पुरुषेषु परस्पर-मुखाऽवलोकन-पूर्वकं सामर्षं ससन्देहं सभयं व्याहरत्सु, तरुणाऽमृत-किरणाऽमल-भरणाऽतुल करुणारस-तरङ्गिणी-विहरन्मरालायमानः शरणः स करडीश्वरस्तदा कुतुकित-हृदा विलसित-मुदा रदन-च्छदान्त-स्मित-रदावली-कान्ति-चञ्चच्चन्द्रिका-सन्तर्पयत् पिशुन-जन-वचन-तपनाऽऽतप-सन्तप्त-तद्-राजपुरुष-सन्तान-मनश्चकोर-निकरः, सुकर-विकच-मुखाऽम्बु-जनिर्यद्-वचन-निचय-मरन्द-झरीभिस्तन्मासेन्दिन्दिर-वृन्दमानन्दयतुकामः, कामं ध मद्भिः श्रीमद्भिर्महनीयैरसहनीयो मुधातापःसंजहनीय एव, पुरोप-कण्ठोपवन-पालकोपचरित-कुसुम-फल-विसर-लसत्तरुलतावली-सुस्थिति-विलोकने कुलोक-नाना-वचन-जनित-सन्देहेन को विवादः ? कर-कलित-कनत्-कङ्कण-किङ्किणी-प्रत्यग्र-प्रत्युप्त-मणिगण-सन्दर्शनेऽप्यादर्शनं किं

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


मृषाभूत-तदभाव-सूचक-जनवाग्-जनिष्यमाण-शङ्कया परमरुणोदय-समालोकने किमालोकान्तर-सहायः साधितव्यः? केवलं भवतां हृदयं तावद् द्वि-त्रि-वत्सरैर्भवितव्यम्; कार्यं मासाऽन्तः कथं समासीदिति शङ्का बाधते, शिव-कृपा-बलेन निर्वर्तितं संज्ञा-मात्रेण निखिल-ब्रह्माण्ड-षण्ड-विचित्र-सर्गविधातुः परमेश्वरस्य लसदपार कृपायाः किमसाध्यं वाक्प्रपञ्चेन किं भूयसा सम्भूय साधवः सर्वे भवन्तः समागच्छन्तु; शुम्भत्तन्त्री-स्तम्भ-समूह-द्रढिमतमं भवत्प्रक्लृप्त-परिमाण-पद-पर्यन्तं तेषामनन्ताऽन्तःस्थितिं च पुनरेतत्कार्यंकृते भवद्दापित-वित्त-व्ययो भवेन्न वेति च समस्तं परीक्षन्तो भवद्भिर्यथाऽऽदिष्टं तथाऽऽचरितं वृथा व्यथा कथा पथाऽभिगमनेन किमिति सन्दानित-सन्देह-सन्दोह-भिन्दत्-सान्त्व-वचन-परम्परा-निर्यच्छान्ति-रसप्रसारैस्तेषां परिदुर्वारं खर्वान्यन्निर्वापयामास ॥ ३२ ॥

ततो भृशं विस्मयमान-चित्ताः
तत्तादृशैस्तद्वचन-प्रचारैः ।
सन्दृष्टुकामा विनयाऽभिरामा
प्रतस्थिरे तेऽधिकृताः स-सामाः ॥ ३३ ॥

तदा तु नीचा परिहासवाचा
श्रीशङ्करोऽस्याऽऽलय-किङ्करः किम् ? ।
स्वयं समेत्याऽऽशु विधातुमेतत्
कार्यं त्वनार्यं तदियं भ्रमोक्तिः ॥ ३४ ॥

इत्थं निगद्य सकला विकल-प्रतप्त-
स्वान्ता हि तण्डुल-वणिग्वर-चिन्तनेन ।
संक्रान्त-संशय-धियोऽपि मुहुस्तथा स्यात्
किं चेति सञ्चलित-चित्तमया ययुस्ते ॥ ३५ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



भक्ता किमत्र भवतीति नितान्त-चिन्ता-
सक्ताः शिवाऽङ्घ्रि-कमल-स्मरणाऽनुरक्ताः ।
धिक् तादृशीं किमुररीकृतवान् कृति चे-
त्युक्ता महानयमति-प्रणयाऽभिषिक्ताः ॥ ३६ ॥

जवं व्रजन्तो जयतर्षवन्तो
विचारयन्तो विविधं वदन्तः ।
भवंभजन्तो भयमावहन्तो
मुदं दधन्तश्चिर-धर्मवन्तः ॥ ३७ ॥

जग्मुः सम्भूय ते सर्वे । करडीशाऽभिमानिनः ।
वीरशैव-सदाचार- । गाराप-घन-राजिताः ॥ ३८ ॥

तदनु तदनुमोदाऽऽकीर्णमानाऽन्तरङ्गो
मरिबसवकुमारः कालतत्त्वाद्यभिज्ञः ।
भवति किममुनेति श्रीमरिस्वामि-योगी-
श्वर-मठमगमत् सद्भक्त-संघैः समेतः ॥ ३९ ॥

नत्वा तं यति-पुङ्गवं, पद-तले स्थित्वा, तदंघ्रि-द्वयं
नुत्वा, फाल-तटे कराऽम्बुज-युगं धृत्वा, कुमारोऽदिशत् ।
ध्यात्वा योगिवरश्चिदा स्मित-मुखो भूत्वा परं सादरं
कृत्वाताननुमोदिनः समवदद् भित्वा भयं भावि तत् ॥ ४० ॥

भयं मा भूयाद् वो भव-भय-भिदः पङ्कभवभू-
शिरोभेत्तुः शम्भो सरस-करुणौघ-हृदभुवाम् ।
सदा सद्भक्तानां भवति न च भङ्गः क्वचिदसौ
शिशूनां सिंहस्याऽधम-मृग-तते कांक्षति कथा ॥ ४१ ॥

अयं प्रसङ्गः करडि-प्रसिद्ध-
प्रभूत-भास्वन्महिमा प्रशस्ते ।
हेतुर्भवत्यत्र जयो न भङ्गः
सत्यं हि सत्यं पुनरेव सत्यम् ॥ ४२ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



इत्थं निगद्य यतिराट् क्षितिराजितोद्यद्-
भक्तान् कुमारमहितं क्षपिताऽन्तरायम् ।
गच्छध्वमाधि-रहिताः सहिता मुदेति
द्राक् प्राहिणोच्च सकलाः सुकलाऽभिरामान् ॥ ४३ ॥

जग्मुस्ते यतिराजोक्त्या । निर्भया दुर्भय-च्छिदा ।
मन्द-हास-लसज्ज्योत्स्ना । चञ्चन्मुख-सुधांऽशवः ॥ ४४ ॥

ततः प्रथित-जङ्गमास्तत-घनाऽनुरागोद्रसाऽ-
न्विताऽऽत्म-हृदया दयाञ्चित-दृगन्त-कान्ताऽऽननाः ।
कृतान्त-रिपु-सत्कृपाऽद्भुत-बलेन भूयाज्जयो
नितान्तमिति सद्गिराऽऽहित-जयाऽऽयुषः संययुः ॥ ४५ ॥

इति मानाऽतिग-नानाविध-समधिकार-राजि-राजित-समुन्नत-चन्नपुरी प्रमुखराजधानी-समागत-राजद्-राजपुरुष-प्रतान-कृताऽनर्थ-सूचनाऽभ्यसन-व्यसन-रमन-पिशुनावली निजाऽनुरक्त-भक्तप्रकर-सुकर-विजयाऽऽशीर्वचन-निचय-मुखर-मुखाऽमोघ-महिम-महित-माहेश्वर-सङ्कुलेषु समाकुलेषु करडीश्वरस्तदा नैसर्गिक-निचभजक-शरणजन-विजय-प्रदान-प्रतिभू प्रमथाऽधिप-प्रसाद-भविष्यन्निज-कार्यसिद्धि-प्रमा-जनित-प्रमोदाऽमृतरसपूरो हृदय-हृदमापूर्य, वदनाऽरविन्द-बिलाद् बहिर्निर्गत इव लसित-दरहसित-निर्यद्रुचिसदन-कदन-विसरद्युति-चञ्चच्चन्द्रिका-सान्द्रवदन-चन्द्रमाः पञ्च-परुष-प्राञ्चद्बसवराजाऽश-त्वात् तदनन्यथाविधस्तेषां तन्त्री-स्तम्भानां निकटमागत्य, विलोचनाभ्यां निरीक्ष्य, हस्ताभ्यां स्पृष्ट्वा, भावेन सम्भाव्य, वाचा निगद्य, यूयं महान्तः श्रीमन्तः परीक्षध्वमेषां सु-स्थितिमिति मतिमतिक्रान्त-वदन-सरसीरुहे परिगलित-सरसवचनवैखरी मरन्दझरी-परितृप्त-तन्मनो-मधुकर-निकरस्तस्मिन् महात्मन्युपविशति तेषु राज-पुरुषेषु परीक्षितु-मुपक्रान्तेषु ते स्तम्भास्तदानीमुदारचरितोऽयं महात्मा मर्त्यलोकमवतीर्य, स्वभारमपजहार विहारतः प्रत्युपकृतिः कर्तव्येति वसुन्धरा हि राज-

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



क्रमठैरन्तराकृष्टा इव व्यवस्थापित–प्रमाण-पदवीमतीत्य वीतस्मितमा-त्रमन्तर्गतास्ततुकरडीशेऽनितर–साधारणभवितभृति–द्रव्यमादाय, परमे-श्वरेण प्रमथैः साकं, अत्यन्तदृढ–बन्धनमुपनीता इव समधिगताऽति-दार्ढ्यश्च ते सर्वे तान् निभृतं नितरां निरीक्ष्य, तथाभूतांस्तम्भान्–जृम्भमाण-प्रमदानां क्रम–दापितवित्त-द्विगुण–त्रिगुण- द्रविण–व्ययेनाऽ-प्येषा कृतिर्न भवितव्येति कुतुकितानामधिकृत-जनानां मनांसि तु नासम-करडीश-महीमा-कदम्ब-कादम्बिनी-प्रवर्षिताऽऽनन्द-रसाऽऽसार-झरी-तर-ङ्गिणी–समाकृष्टानि सहसा सभयाश्च पयो-राशिमवशमविशन् ।।४६।।

दृष्टाः प्रहृष्टाः किल राज-पुंस-
स्तन्त्री-लसत्–स्तम्भ–दृढ–स्थितिं ताम् ।
परीत–पुष्पालि-फल–प्रतानं
वनं विलोक्याऽऽलि-खगा इवाऽमी ।। ४७ ।।

तदा तु दुष्टाः पिशुनाः समस्ता
नितान्त–चिन्ताऽऽकुलिताऽन्तरङ्गाः ।
मित्रोदयेऽग्रायन-वीक्षणाऽन्धा
घूका इवायुर्निज-गोप्य-देशम् ।। ४८ ।।

दृष्ट्वा तेऽधिकृताः कृताऽतुल–तदीयोद्यन्महत्त्व–स्थितिं
संप्राहुर्महतीं कृतिः कथमभूदल्पैर्दिनैरीदृशी ? ।
अस्मद्दत्त–धनाऽधिकाऽधिक-धन–व्यूह–व्ययेनाऽपि नो
भाव्यादः सकलं तदीय–महिमा–वल्लीमतल्ली-फलम् ।। ४९ ।।

इत्यमुदीर्य वयं किमपि प्राग्
ग्राम्य-वचो ह्यवदामः स मनाक् किम् ।
इत्यतिभीतहृदयाः समयोचयन्
अन्तरनन्तमनन्तर–चिन्ताः ।। ५० ।।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



एवं विचार्य भयतो नय-तोय-सिक्त-
स्वान्ताः प्रशान्त-मनसं जन-संस्तुतं तम् ।
क्षन्तव्य एव भवता शिवतातिवृत्तो
मन्तुः किलेति ववदुर्भवदुर्भयघ्नम् ॥ ५१ ॥

मरिदावयं हि विलसद्धिषणादि-हीनाः
किं ते महत्त्वगरिमाऽऽकलने प्रवीणाः ।
कूपाऽऽदिमाऽम्बु विहरज्जल-जन्तु-जालं
रत्नाऽऽकराऽसम-गर्भारिमवेवेत्ति किं वाम् ॥ ५२ ॥

प्रागेव मूढाः पिशुनोक्ति-जालैर्
बद्धा कृतेयं भवतः परीक्षा ।
यदाहितं तन्महनीय-कीर्ते !
क्षमस्व; सच्छान्ति-निधे ! क्षमस्व ॥ ५३ ॥

इति विनय-रसार्द्रैर्भाषणैस्तोषयन्त-
स्तव समभिमत यत् कर्म तत् कुर्म एव ।
इति हित-सरसमुदीर्य स्वाऽऽलया श्लीलया ते
ययुरतिकुतुकास्तद्वर्णनाऽऽकीर्ण-जिह्वाः ॥ ५४ ॥

भक्तास्तदानीं करडीश-कार्याऽऽ-
सक्ता जयश्री-घटनाऽतिसक्ताः ।
सिक्ताः प्रमोदाश्रु-झरैर्ननन्दुर्-
व्यक्ताऽतिमोदाऽच्छ-वच-भानु-रक्ताः ॥ ५५ ॥

सपक्षाश्च द्वि-जनुषो । जङ्गमाः सुख-विभ्रमाः ।
करडीश-महा-भक्ति- । फलात् संमुमुदुस्ततः ॥ ५६ ॥

जगति स करडीशः शम्भु-भक्तिर्महीयः
स खिल-समय-सङ्घेनेतरैतत् समेति ।
जन-मनसि भृशं संस्थाप्य तत् स्तम्भवत् सद्-
विनय-तनय-रत्नाऽलङ्कृताऽग्राऽध्व-देशः ॥ ५७ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


भक्तोत्करोपस्कृत-पार्श्व-भाग-
श्चञ्चच्चर-श्रेण्यनुगम्यमानः ।
भ्रमद्द्रुमोद्यल्लतिका-वनाली-
मद्योच्चलच्चैत्र इवा व्यराजत् ॥ ५८ ॥

इति भव्य-मनोज्ञ-वैभवायतिरञ्जत्सु मनःसु मानस ।
अतिमोद-भरेण सत्वरं यतिराजेन्द्रमठ स शिश्रिये ॥ ५९ ॥

तं जङ्गमाऽधिपतिमेत्य स भक्त-भास्वत्-
पुञ्जोऽभिवन्द्य यतिराज-पुरःप्रदेशे ।
रञ्जंस्तदीय पदपद्म-नुतिं वितन्वन्
कञ्जाऽन्तिक-स्वनदलि-व्रजवद् विरेजे ॥ ६० ॥

भक्तावलिः सा करडीश्वरश्री-
मरीश-वाचोपविशद् विशङ्कम् ।
तदीय-चञ्चत्-करुणा-दृगाभा
सुरापगाऽऽपूर-चरन् मरालः ॥ ६१ ॥

तदा स भक्त-प्रकरः प्रवृत्ति
चिदा प्रवृद्धां यमिना पुरैव ।
उदाहरत् तत् करडीश-भास्व-
दुदार-कीर्त्यम्बुजिनीशिपांथाम् ॥ ६२ ॥

आकर्ण्य तां कर्ण-सुधां । मरीन्द्र-शिवयोगिनः ।
तदानन्दश्चिदानन्द- । शिरश्लाघाऽनुगोऽभवत् ॥ ६३ ॥

स भक्त-सञ्चये तत्र । योगीन्द्र-कुतुकाऽऽकुलः ।
जगदे जगदानन्द- । करं परमरं वचः ॥ ६४ ॥

सद्भक्ति-भावन-वशीकृत-शङ्कराय
भक्तावलीर्न च कुतोऽपि भयं त्रिलोक्याम् ।
आत्माऽऽलयाऽङ्गण-निबद्ध मृगेश्वरस्य
पुंसः किमत्र भयमन्य-भवं भवेच्च ॥ ६५ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


मत्त-द्विपेन्द्र-दमनोल्प-मृगारि-हन्ता
स्वच्छोऽतिचारु-गिरिकोकिल-सत्त्व-हारी।
पञ्चाननः किल मनः-कुहरेऽस्ति येषां
तेषां तृणं हि जगदेव कुतोऽस्ति भीतिः ? ॥ ६६ ॥

अत्र काञ्चित् कथां सर्व- । व्यथाऽपनयदक्षिणाम् ।
वदाम्यति-मुदा यूयं । शृणुध्वं श्रद्धयाऽञ्चिताः ॥ ६७ ॥

पुरा विरूपाक्ष-घनाऽनुकम्प-
पम्पा-सरो-मज्जन-पूत-कायः ।
हरीश्वरो नाम महाऽनुभावः
श्रीवीरशैवायन-पान्थवर्यः ॥ ६८ ॥

त्रेधाऽर्चा-नियताऽऽयताऽभव-मताऽऽचाराऽति-साराऽध्व-सं-
चार-स्फार-विचार-वाङ्-मुदित-चित्पूराऽच्छ-धीराऽऽवलिः ।
वागद्वैत-पथ-व्यथाऽऽकुलवृथासामोक्ति-भूमोत्थ-दु-
ष्प्रेमोद्भ्रान्त-कुधी-जन-प्रकर-दुर्वेदान्ति-वादान्तकः ॥ ६९ ॥

विरूपाक्ष-प्रतानैषत्- । प्रचार-सुधियां वरः ।
विरूपाक्ष-पदाऽब्जैक- । सक्त-हृन्मधुपोऽभवत् ॥ ७० ॥

सोऽयं हरीशः किल जातु विद्या-
नगर्यधीशाऽर्थितयेव भूयः ।
प्रधान-पट्टं च दधान सम्यग्
विधानतः सर्व-विधानवद् यः ॥ ७१ ॥

सुरवर-शिवकृति-दक्षो हरिहरदेवो हि लीलया धरणौ ।
नरवर-कार्यौघ-धुरन्धर-परतामभजदभवदभवांऽशः ॥ ७२ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


आदाय-व्यय-मुख्य-लेखन-विधौ नित्यं "विरूपाक्ष" इ-
त्युद्यत्-पुस्तक पूर्णमेवमलिखत् सोऽयं त्वमायः सुधीः।
अस्रान्तं वचसा हृदा च वपुषा श्रीमद् विरूपाक्ष सं-
स्तोत्र ध्यान-समर्चनैक-धिषणा-न्यासाऽविनाऽऽशय। ॥ ७३ ॥

तत्सन्निरीक्ष्य पिशुनाः पशुना समानाः
सम्भूय चाऽऽशु मुदिता हृदि तावदेतत् ।
राज्ञे निवेद्य सकलं विकलं विधातुं
तं सद्वरेण्यमयतन् नय-तत्त्व-शून्याः ॥ ७४ ॥

वृथा हासाऽऽभासं व्रतमुख-बिलास्ततृक्षति-मनो-
रथाः सर्वे चोर्वी-धव-सविधमासाद्य नमिताः ।
यथा दृष्टं स्पष्टं परिहर महाऽऽचार्य-लिखितं
तथा राज्ञे त्वज्ञाः परमकथयन् भूरिकपटाः ॥ ७५ ॥

कश्चोपले कठिनतां कटुतामरिष्ट-
क्षोणीरुहे त्वखिल-कर्तनमाखु-वर्गे ।
कुम्भीनसाशिशि विषन् सुजनालि-वैर्यं
दुष्टावतो किल युनक्ति कुलोचितं तत् ॥ ७६ ॥

श्रुत्वा तदीय-लपितं कुपितः क्षितीन्द्रः
किं स्यादिति च्युत-नयो घनयोग्य-सिंहम् ।
आकारयत् तमतुलं मति-लङ्घिताज-
मर्त्याऽधिराज-गुरुमा गरिमाऽभिरामम् ॥ ७७ ॥

समं पुस्तकमानीय । समालोक्य स मानवेट् ।
समस्तमस्तमभवत् । समचिन्तयदित्यलम् ॥ ७८ ॥

तमालोकयन् क्षमा-वल्लभोऽपि क्षमा-लोपतः समानाऽसमाऽक्ष-पदैक-समासीन-सुमानसं समाज-सरसी-हंसमास्थितं समाजे समाज-हार ॥ ७९ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


दानाऽऽदानादि-नानाविध-कृतितति-संलेखन-स्थान एवो-
न्मत्त-प्राणीव नित्यं लिखितमिह "विरूपाक्ष" इत्येव पूर्णम् ।
युक्ताऽयुक्ताऽतिशक्ता जगति घन-जनाः किं वदेयुर्ममेत्याऽऽ-
शङ्काऽऽतङ्कोऽपि नाऽभूत् तव किमिति वृथा गर्जयाऽतर्जयत् तम् ॥८०॥

भवान् महानुन्मतिमान् कृताऽर्थी
कृताऽऽश्रिताली-नुत-सद्गुणाङ्कः ।
इति प्रबुध्वा सकलाऽधिकारो
दत्तो हि मत्तो हितमाचरस्त्वः ॥ ८१ ॥

किं चाऽयशः प्रसरणं मरणं बुधाना-
मात्माऽवमान-जननी घन-नीति-हानिः ।
गर्ह्या पथाऽनुसरणं करण-क्रियाली
वल्ली-लवित्रमिति सन्मति संमतं न ॥ ८२ ॥

लोकाऽपराध-जननं ननु नाऽप्यशङ्कि
चाऽहं त्वयाऽतिगुणिना गणिनाऽप्यतर्की ।
राज्याऽर्थ-राशि-विलयो निलयोऽऽसि धर्म-
स्तोमस्य-भाव्य-निधिना विधिना कृतोऽसौ ॥ ८३ ॥

किं वा भवत्वद्य भवत्-प्रियः स्या-
दस्मत्-समस्ताऽर्थ-समूल-लेखाम् ।
प्रदर्शयाऽद्यैव दिनाऽवसानाऽ-
भ्यन्तो हि किं तेन विचारणेन ॥ ८४ ॥

इति क्षितिपतिः कृति-क्षति-समुत्थ-चिन्ताऽति-निष्ठु-
र-स्फुटतर-स्फुरद्-गिरमुदीरयंस्तत्परे ।
तदा किल मुदा सद्मृशमुदार-धीरब्रवीत्
तथाऽस्तु न वृथा व्यथा नृप ! यथाऽस्ति चित्ते तव ॥ ८५ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



इति निगद्य, जगद्वन्दितेन तेन महात्मना मत्कार्य-समापनाऽवधि तत्रैव सत्पथे स्थीयतां स्थीमतामस्त-गोत्र-पथप्रवृत्ति मा माऽनुसराऽनु-सरेति गिरा कराऽब्जेन च निरुद्धः खरांशुर्महोदयगिरि-सुकर-सरोरुहे चिराऽऽदराऽऽत् तन्निरोधं तिरस्कृत्य, गन्तुमक्षम इवाऽथवा शिवांशस्य तस्य न वाऽसम-महिमोत्सवाऽवलोकन-सम्भवाऽऽदरादिवाऽऽहोस्वित् पुरा किल पुरारेः सुराऽसुर-वरालि-चिराऽऽहित-निज-शासनस्याऽपि परम-महिमालि-परिकर-मेरेमिण्ड्देव हलायुध-प्रमुख--निजशरणगण-शासन-चकितस्य चरितमात्मनः सकल-साक्षित्वात्, जगच्चक्षुस्त्वात् स्वानुभूतमन्तश्चिन्तयनीस्वस्याऽपि तस्याऽष्टमूर्तेरङ्गत्वात् सङ्गत-साध्वस इव तस्याऽसमस्याऽनुज्ञामवज्ञाय चलितुमसमर्थतया स तामरस-बन्धुः सुसामरस-सिन्धुः स्थित-स्थल एव परित्यक्त-पुरोगति-व्यवस्थः स्वस्थस्तस्थौ ॥ ८६ ॥

तदा किल द्वादश-वत्सरान्तं
सदा प्रवृत्ता-खिल-वृत्त लेखाम् ।
मुदा त्वनीषत् खलनं भृशं तद्-
विदा समक्षं विशदीशकार ॥ ८७ ॥

घन-जन-सन्दोहादि- । (मन)न-स्तम्भनादिकम् ।
न न साध्यं हि कस्याऽपि । ननन्दुरिति निर्भरम् ॥ ८८ ॥

समीक्ष्य चरितं चित्रं । तत्रत्या गुण-रागिणः ।
विस्मयोन्माद-सङ्कीर्णा । इव शीर्षाण्यकम्पयन् ॥ ८९ ॥

दृष्ट्वा बुधा कौतुकेन । स्पृष्ट्वाऽङ्गुल्याऽग्र-नासिकाम् ।
सृष्ट्वाऽऽमोदं सभायै सं- । मृष्ट्वाऽतीवेदमब्रुवन् ॥ ९० ॥

शिष्ट-चिन्तामणि-"विरू- । पाक्ष"-नामाऽङ्क-पुस्तके ।
किमाश्चर्यं महापुंसां । लेखामात्र-प्रदर्शनम् ॥ ९१ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



निन्दाऽऽनन्दा ह्यमन्दाऽभ्युदित-परिभवोज्जृंभित-क्लेश-तापा-
क्रान्ताः क्लान्ता निशान्ताऽरुणगलित-रुचीन्दीवराङ्कावहास्याः ।
मूका-स्तोकाऽन्यलोकाऽङ्कुरित-हरिहराऽऽचार्य-शंसा-प्रसङ्गे
जाता भूताऽभिभूता इव किल गदितुं न क्षमा न क्षमाढ्याः ॥ ९२ ॥

अकलङ्क-विरूपाक्ष-। नामाऽङ्कित-सुमस्तके ।
अङ्काऽऽलि-दर्शनमिदं । चित्रं चित्रमिति क्षितौ ॥ ९३ ॥

सन्तोलं तोषवन्तोऽभवमत-सुभगाऽऽचार-पूगाऽरविन्द-
स्तोमोद्दामोदभूमोदय-रविकिरणाऽऽयत्त-सद्वृत्त-पूर्णाः ।
शान्ता दान्ता नितान्ताऽतुलविशद-यशः क्षालिताऽऽशालितत्यं
स्फाराऽपाराऽघ-दूराऽसम-महिम-समालोकमालोकमानाः ॥ ९४ ॥

राजा निरीक्ष्य महिमाऽतिशयं तदानी-
माश्चर्य-साध्वस-रासाऽम्बुधि-मज्जनेन ।
संक्रान्त-वेपथुरिवोद्गमिताऽति-शीता-
दुद्यद्-भयाऽऽकुल-धियाऽतितरं चकम्पे ॥ ९५ ॥

कृताऽभ्यनुज्ञस्तपनश्च तत्क्षणं
गत-स्व-वेलाऽन्तर-गम्यमानम् ।
स्थलं जगामाऽब्ज-दलानि लाति
स्खलल्ललत्सज्जल-बिन्दुवत् सः ॥ ९६ ॥

क्षितिप ! त्वतिपावन-क्रम-
स्तुति-पाठालि-ललन्मुखाऽम्बुजः ।
वितपत्-तत-पापभित् तद-
ञ्चित-पादे शतशो ननाम च ॥ ९७ ॥

अन्तर्नितान्त-धृत-साध्वस-कम्पमानो
मन्तुं ममाऽद्य महिमाऽम्बु-निधेः क्षमस्व ।
क्षन्तव्य एव भवता शिवताति-धर्मा
क्रान्ताऽऽशये न सुतरामितराऽपराधः ॥ ९८ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



अज्ञान–कृतमेतन्मा । सुज्ञार्यं गणयाऽव माम् ।
तनुभूतादितस्तातोऽ– । तनुमात्रं न शङ्कते ॥ ९९ ॥

इति क्षोणी–पतिर्दैन्यो । नतिरार्यंमति-स्तुवन् ।
अतिक्रान्तमिति श्रद्धा । यति–सेवारति-स्थितः ॥ १०० ॥

सुतरामितराऽनिवार्यं–भा-
जित-राजाऽच्छ-यशो यशोऽभितः ।
मतिराजित-राजि-र्वणितो
ह्यतिरागः स महानशोभत ॥ १०१ ॥

अयं च करड़िग्तथा शिथिल-कल्पित-स्तम्भ–सद्–
दृढः स्थिति–महत्त्वमुत्तम-विध विधायाऽधुना ।
सुसम्मुद-रसाऽम्बुधौ भृशममज्जयत् सज्जना
निमुन्नतमुमापतेः शरण–सन्ततेः सन्ततम् ॥ १०२ ॥

इत्थं योगीन्द्र–चन्द्रोदित–शरण–कथा-सार-पीयूषधारा
तृप्यच्चेतश्चकोरा(:) सुकर-सुचरित–व्रात–संपूत- कायाः ।
वन्दन्तस्तं यतीन्द्रं सुरुचिर–करडीशाऽऽहिताऽऽश्चर्य–वृत्तं
स्वाऽन्तं सञ्चिन्तयन्तो ययुरसम-सुवाक् के लय स्वालयंस्ते ॥ १०३ ॥

ततश्च सान्निध्य·गत कृपारं
जिताऽक्षि–वीक्षाऽभियुताऽतिमोदम् ।
सुतं यथाऽऽलिंग्य दृतं गृहैभ्या
यतीश्वरेणाऽथ कृताऽभ्यनुज्ञा ॥ १०४ ॥

नमन् मरीशाऽमल–पाद–पङ्कज–
भ्रमद्द्विरोफोऽखिल-रेफवर्जितः ।
समं सुताद्यैः करडीश्वरश्चरैः
समञ्चितं मन्दिरमाजगाम सः ॥ १०५ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


द्विप-लपन-षडास्यौ गोपयन्ती शिवाऽङ्के
क्षपदुपमसुविद्या शौर्य-सम्पन्निधीव ।
विपदपनय-दक्षा प्रेक्षदक्षि-त्रिभागा
क्षिपदपरिमिताऽऽभा चित्रिता मां शिवाऽव्यात् । १०६ ॥

इति श्रीविनमदमरवरनिकरमौलिमणिप्रभापटलपाटलपरशिवपदार-
विन्दस्यन्ददमन्दकृपारसमरन्दझरीपरितृप्तिमदुरेन्दिन्दिरायमान-
मानससरसकविताकुतुकाकलितपर्वतसुधीविरचिते
करडीशचरितामृतचम्पूप्रबन्धे अष्टमः स्तबकः ॥



॥ श्रीरस्तु, श्रीरस्तु, श्रीरस्तु ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

॥ शम्भो ! प्रसीद ॥

# नवमः स्तबकः

शिवतातिं स्व-भक्तानां । शिवाऽन्यदपसारकम् ।
शिवाऽऽश्लिष्ट-तनुं वन्दे । शिवं शङ्करमिष्टदम् ॥ १ ॥

सदृढ-गुण-वितालीकीर्ण-कीर्ति-प्रतानां
शुक-विमल-वितानां[1]च्छादितांऽऽशाऽवकाशः ।
अभवदथ कदाचिद् राजकीयोद्यमौघे
निखिल-धन-विनाशोज्जायतान्वायतस्य ॥ २ ॥

तस्मिन् प्रसङ्गे समराजदेय-
द्रव्यं स्वशक्ति समतीत्य जातम् ।
किं वा भवत्यत्र कथं किलाऽस्ये-
त्यन्तश्च सन्तःसमचिन्तयंश्च ॥ ३ ॥

क्षेत्राऽऽलय-द्रविण-रूप्य-सुवर्ण-मुख्यं
द्रव्यं प्रदत्तमपि तत्परिपूर्तये न ।
किं वा विधेयमिह कस्य वदेयमेतद्,
हन्तेति चाऽन्तरतपन्नति-पक्षपाताः ॥ ४ ॥

धूर्ता हि सम्भूय सलीलमेनां
वार्ता समाकर्ण्य पर-प्रमोदे, ।
आर्ता त्वजस्रं परसंविराजत्
कर्ता वरागा जगदुः सहासम् ॥ ५ ॥

---

[1] वितानाच्छादिता 'ख' पुस्तके

CC-0.-Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

चिरादपि परं त्वयं चर-चयाऽतिसन्तर्पणं
विधाय च मुधाऽधुना धन-विनाशनं प्राप ह ।
मनागपि धनाऽर्पणोच्चकितचित्त-सद्वर्तकान्
विनिन्दति जनान् घनानुचितमेतदस्याऽऽगतम् ॥ ६ ॥

को दास्यति ददात्वद्य । राजदेय-धनं घनम् ।
चिरा बुधा गायकाद्याः । साधवो वाऽनुजीविनः ॥ ७ ॥

सद्यः शरणमुल्लास्या । हृद्यं वचनमुच्चरन् ।
स्वाऽऽद्याऽन्न-भुक्चराऽनीको । दद्याद‌द्याऽतुल घनम् ॥ ८ ॥

ततो निन्दा-रसाऽऽस्वाद- । हृत[1]जिह्वाऽऽयताऽऽननाः ।
इति हास-कथा-शून्य[2] । इतिहासं वितेनतुः ॥ ९ ॥

जाल्मासीं विशयोग्यता विवरणे पूर्वोऽधिको लक्ष्यते
स्पृष्टोऽन्त्यो दशनैर्दशन् कमपि वा हन्त्यत्र नाड्यस्तथा ।
तूष्णीमेव यशस्विनो नयवतो विद्यावतोऽञ्चद्गुणान्
साधूनेव विविच्य हन्ति कुवचोमात्रेण कोऽत्राऽधिकः ॥ १० ॥

द्विजिह्वता वक्र-गतिः परा स्वाऽऽ-
कर्षः खलेहा तु समं किलैतत् ।
विषं विधात्रा निहितं रदेऽहेर्
भेदस्त्वियांस्तद् रसनाऽञ्चलेऽस्य ॥ ११ ॥

क्षौद्रं निधाय सरघा निरघा हि तत्र
व्याकीर्णिताऽण्डभवन लवनार्हमासाम् ।
चक्रे जडोऽजडजभूः खल-जाल-जिह्वा
प्रान्ते क्षिपद्यदि भवेद्भुवन-स्तवाऽर्हः ॥ ६२ ॥

---

1 रत "ख" पुस्तके
2 शून्या 'ख' पुस्तके

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


दुष्ट-शिष्टोभय-क्रौर्ये । गरीयान् शिष्ट एव हि ।
रूक्षाऽक्षरेषु विद्धोऽस्याऽऽ- । हन्ति क्षान्तैव तं त्वहो ॥ १३ ॥

संमार्जिनी क्रकचयोपरवर्णयुग्म
योगेन यो विरचितो विधिना हि तस्य ।
अत्यल्पताऽस्थिरतरा सुपरा सुहिंसा
किं साधिता प्रकृतिरेव हि का प्रशंसा ॥ १४ ॥

परनिन्दा-पराणां च । दर-संत्कार-सम्मुचाम् ।
पराभव-स्पृशां चिन्ता- । परताऽलं तथाऽस्तु सा ॥ १५ ॥

ईदृग् विपद्यपि तथा । गणाऽऽराधनमन्वहम् ।
करडीशः करोत्येवे- । त्याश्चर्य-भरिता बुधाः ॥ १६ ॥

तथापि सोऽयं करडीश्वरः किं
यथा[1] मवापेशदपिः स्वचित्ते ।
यथाविधिः स्वीकृत-कर्म किं सत्-
पथाऽनुगो मुञ्चदहो महान् सः ॥ १७ ॥

सम्पदि विपदि च तोषः शोषः संलगति जगति महतां न ।
प्रावृषि घने प्रवर्षति रवौ तपे तपति चैकधा शरधिः ॥ १८ ॥

विषभवसख-दुस्तेजस्तप्ताऽङ्गोऽपि स्वयं हि सन्तप्ताम् ।
सत्पथगामी सुभगो घनोऽवनीमवति जीवनं यच्छन् ॥ १९ ॥

लुम्पत्सदुपागमद्घनमनः क्लेशेन धीशालिनो
धर्मैः कर्म निजं त्यजन्ति न मनाक् सन्तो लसन्तो गुणैः ।
कृष्टोत्कृष्ट-घनोऽम्बुधिर्नतनते देवैः स्वभावाऽञ्चित
भूयस्तोय-भृतां स्वजीवनमुपानीयाऽचलाया स्थितिम् ॥ २० ॥

---

[1] व्यथा 'ख' पुस्तके

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


नित्यं स्व-भ्रमण-क्रिया व्यपनयद् विश्वातितापा जगत्
प्राणाश्चाऽतिबला: सदागतिरता: सन्तोऽति-शान्तोदरा: ।
सश्रीकाश्च गतश्रियश्च सततं चैक-स्वभावास्तथा
भूतोऽयं पवमान एव पवन: सक्तो हि मुक्तो मया ॥ २१ ॥

तादृक्प्रसङ्गेऽपि च नाऽक्षरेप्य-
क्षरत्वमुत्सारितमेव तेन ।
"न"कार एषोऽन्य-कृते प्रयुक्त-
सार्थे हि सिद्ध्येदिति शङ्कयेव ॥ २२ ॥

तदानीमपि सदाऽऽनीत-स्वकायक-व्यवहार-प्रचय-चित-द्रविण-सञ्चयैरञ्चल-चित्ततया करडीश्वर: सोऽयं भीष्म-ग्रीष्मघ्यादापि पावनीभूत-स्वजीवनीयै: परिसराऽवनी निबिडतरुलतावनी केदार-समुपगत-प्राणिजालवनी धुनीव वनीपकमनीषित-पूरणमनाथजन-संरक्षणं चरग-सन्तर्पणं ह्यद्याऽनवद्य-विद्याऽध्यापनं च निरन्तरं चिरं तुषित-सकल-जनोमनो-विनोदेन धनोऽतनोच्च ॥ २३ ॥

अथ तं करडीश्वरं धृतिग्रथनार्थं मरियोगि-पुङ्गव: ।
पृथगन्तिकमानयन् भयोन्मथनं वाक्यमिदं जगाद स: ॥ २४ ॥

चिन्तां सन्त्यज सपदि समन्तादेवाऽन्तकान्तको विपदभ्र् ।
सन्तारयति दुरन्तां रन्ता भक्ता चिरं तया बद्ध: ॥ २५ ॥

तदनु, तदनुग्रह-वाग्-वदनाऽरविन्द-स्यन्दन्मरन्द-झरी-परितृप्त-मान-सेन्दिन्दिर: करडीश्वर एष सतोषमभाषत । २६ ॥

दुर्वार-विपदपाकृतिधूर्वह-भवदङ्घ्रि-सारसे न्यस्य ।
सर्वं स्थितस्य मम परभीर्वारण-पुङ्गवस्य मशकभयम् ॥ २७ ॥

एवमुक्त्वा मरीन्द्रार्यं । देव-पादाऽम्बु जीवयन् ।
श्रीवदान्य-वर: शान्त- । भाव: शालमगात् तत: ॥ २८ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



भवताऽधीनतया दया-शरनिधिः शम्भुः शिवः शङ्करः
सद्भक्ताऽखिल-कार्य-भारवहनं स्वस्येति तस्येप्सितम् ।
जागर्त्येव यतस्ततोऽधिकृत-सन्दोहाऽन्तरङ्गं सम-
स्ताऽन्तर्यामितया नयाऽमृतरसाऽऽधारं चकाराऽञ्जसा ॥ २९ ॥

तथैव, ततस्तेऽधिकृतास्तत्पुरि-स्थिता विनय-युता धर्म-रताः सन्तः सर्वे सम्भूय, "अस्य महात्मनः सहायः कर्तव्य एव" इति निश्चित्य, स्वाऽधिकारोपरि-स्थितेभ्योऽधिकृतेभ्यो राजपुरुषेभ्यः, तस्य करडीशस्य तच्चेतश्चन्द्रोपल-द्रवीकरण-राका-चन्द्रिकायमान-मानाऽतीत-चरिताऽऽवलीं निवेद्य, तैः साकं लोकाऽऽनन्दकरस्य तस्य मनः सकल-जनमनः-समाकर्षण-सिद्धमालिकायिताऽऽयत-सु-गण-तति मूल-राज्ञी च विज्ञापयन्तोऽस्य "निरन्तरं परं चिरं परहितमेव स्व-हित-मिति कृत-कृत्यतामात्तस्य कदाऽप्यमत्तस्य साधु-वृत्तस्य पर-सुख एव दत्त-चित्तस्य प्रवृत्त-कर्मणि वित्तमादत्तं चेदस्मद्राजद्-राजधान्या कुशलं न स्यादि"ति तस्याऽप्यात्मनि श्रद्धामुत्पाद्य, तद्देय-द्रविण-विसर्जनमेवोचितमिति निर्धार्य, पुनः[1] स महात्मैतद्भङ्गीमङ्गीकरोति वा नवेत्यन्तश्चिन्तयन्तः सकलाः सुकला-शालिनः सुमनसा साकं सुमनो-वरस्य तस्य तोषणमेव भूषणं" इति तं करडीशं प्रति, प्रतिदिनं, सुतरामनितराऽऽशं भवत्क्रियमाण-परोपकार-कृते किञ्चिदस्मद् धनं समर्पितं स्याद्, अथवा भवत्सच्चरित-जनित-प्रमोदेन भवतेऽस्मद्दत्त-पारितोषिकमिति वा तुष्यतु तत्-भवान् भवानिति भवता देय-द्रव्यमिव त्यागः कृत इति लेखां सतोषं प्रेषयामासुः ॥ ३० ॥

आदाय लेखां किल राजभृत्या
वृत्तान्तमेनं पुरि शंसमानाः ।
समेत्य तूर्णं करडीश-गेहं
दत्वा सुमानं प्रतिपद्य जग्मुः ॥ ३१ ॥

---

[1] परित्यक्त-पर-धन-कांक्षः इत्याधिकः पाठः "ख" पुस्तके

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



ततः समाकर्ण्य ससाधवः सद्-
भक्ताः समागत्य सकौतुकं ते ।
समीक्ष्य तां साधु सलीलमूचुः
सैषा समासन् महिमेत्यमुष्य ॥ ३२ ॥

तृप्त्यै समासीन-चरावलेस्तां
सन्दर्शयन्श्रीकरडीश्वरोऽसौ ।
ईषद्भवत्पाद-पयोज-सेवो-
द्यमोत्थ-लाभोऽयमिति व्यनंसीत् ॥ ३३ ॥

ऋणं त्विदं स्यादिति तात-पृष्टः
शिष्टः कुमारो न तथेत्युदीर्य ।
इदं तु सन्देहतमःसमुत्थं
योगीन्द्र-चन्द्रेण निरस्यते हि ॥ ३४ ॥

इत्थं स मुक्तेन सुतेन साकं
भक्तैश्च तद्योगि-मठं समेत्य ।
च्छात्रादि-सद्माऽमल-पद्मलीला
हंसं स हंसंससुतोऽभ्यवन्दत् ॥ ३५ ॥

ततः, प्रणम्योपविशतां भक्तानां सकुमारस्य तस्य करडीशस्य च मनःकुवलयानि कुवलयाऽऽनन्दकरो योगीन्द्रः स्वतः परिज्ञात-प्रकृत-प्रवृत्तिजनित-मुखाऽम्बुज-बहिर्निर्यत्-प्रमोदाऽमृत-रसधारा-राराजित-रदन-रुचिनिचय-चञ्चच्चन्द्रिकया समुल्लासयन् करडीश-मनो-गतसन्देहं पश्चाद्दृशा निश्चित्याऽऽश्चर्यं जनानां जनयन् "भो वत्स ! करडे ! मनः-सङ्कोच-जनक-शङ्कां मा भज; नैतदृणं तेषां पुनर्धनाऽऽदान-कांक्षायां सत्यामपि न दत्तं ऋणं भवति; तेषां लेखां पुनर्निरीक्ष्य, विचारय; महान् भवानुररीकरोति वा नवेत्याशंक्य, सा भवत्क्रिय-माण-परोपकार-कृते किञ्चिदस्मद् धनं समर्पितमथवा भवत्सच्चरित-

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


जनित-प्रमोदेन भवतेऽस्मद्दत्त-पारितोषिकमिति वा तुष्यतु तत्र-भवान् भवानिति जरीजृम्भद्विनय-रसझरी-विलोडित-वचन-रचनाभिर्लिखि-ताऽसौ ननु सर्वथानृणमनृणमनृणमिदमितिकरुणा-रस-तरङ्गितल्लेखा-मनालोकितो व्यालोकित इव सर्वथाऽपाङ्ग-विलोकन-कलित[1]वचोभि-स्तस्य करडीशस्य मनः सङ्क्रमित-विचिकित्सामुत्सारयन् भजकजन-नवनवोन्मीषित-शिवोद्धरणे शिवो हीदमवोचत ॥ ३६ ॥

ऋणे किल व्रणे वाऽपि । तृणेऽपि द्रविणेऽपि च ।
समोपलब्धयश्चेते । सन्तो भान्ति हि सन्ततम् ॥ ३७ ॥

अतोऽस्य मानसे शङ्का । गता नैतत् तथा खलु ।
यतीड़िति वदन् भक्ता- । नतोषयदतीव सः ॥ ३८ ॥

चिदैव लेखां किल दृष्ट-पूर्वां
सदा समीक्ष्यन्नथ लोक-रीत्या ।
इदं तु नित्यं शिव-जङ्गमाली-
पदाऽब्ज-सेवा-लतिका-फलं हि ॥ ३९ ॥

इति गदति यतौ तद्ध्वंस-पाद-प्रभावो-
ज्ज्वल-जलज-मरन्दाऽऽनन्द-बाष्पाविलाक्षाः ।
सपदि सकल-भक्तास्तं प्रणम्याऽऽलयं स्वं
ययुरथ करडीशं योगिवर्यं स्तुवन्तः ॥ ५० ॥

सममथ करडीशः सूनुना भानुना स-
ज्जन-सरसिरुहालेर्वन्दयन् नन्दयंस्तम् ।
घन-विनय-वचोभिर्वर्णयन् पूर्ण-भाग्यं
निलयमवजगाहे स्वं चरालयञ्चदब्जम् ॥ ४१ ॥

---

1 ललित "ख" पुस्तकेऽधिकः पाठः

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



भक्ताऽभीष्ट-फल-प्रदाच्च महिमा-वल्ली-प्रभूतोद्यशः
सूनौघाऽमल-मालिका-विलसदभ्राशालिकेशावलिः ।
शिष्टानीक-हृदन्धकार-दलनाद्ध्वंसः प्रशंसाऽन्वितो
योगीन्द्रः स मरीश्वरः सुकरुणा-सिन्धुः सुबन्धुः सतां ॥ ४२ ॥

भवाऽभावो भावभव । भिभवोभव-वैभवः ।
भू भू भवो भीव भावो । भावे भावि भभाविभिः (अयं द्व्यक्षरः) ॥४३॥

सोऽय श्रीकरडीश्वरः सजनुषस्तत्तेजसस्तन्महा-
सम्पत्तेर्यशसश्च तस्य विलसद्वृद्धौ प्रसिद्धेरपि ।
विश्वोल्लासक-दान-मान-घनता-सुज्ञान-सौलभ्य-सं-
शील्याऽऽद्यालय-सत्तनूभव-जनेर्नूनं निदानं यतः ॥ ४४ ॥

तस्मात् स्वाऽङ्घ्रि-सरोज-संस्तव-लसद्वाणी सुवेणीजनू-
स्थानाच्छास्य बिलं पद-स्मृतिरतस्वान्तं नितान्तं सदा ।
पादाऽम्भोज-समर्चनोत्सव-लसत्कायं स्वकीयं सदाऽ-
नुज्ञा-संपरिपालकं स सुतमाहूयाऽप्रमेयादरम् ॥ ४५ ॥

समङ्गल-मुखाऽम्भोज- । समञ्चित-तनूभुवा ।
समं नत्वा स्थितं लोके । समन्तं करडीश्वरम् ॥ ४६ ॥

सादरं किल निजाऽन्तिक-देशं
त्योपनीय चुबकं परिगृह्य ।
प्रेमपूरित-दिशाऽवलोकयन्
भक्त-संसदि यतीडितमूचे ॥ ४७ ॥

"अये, वत्स ! करडे ! अस्माकं भू-लोक-निवासोऽलम्; समागता शिवाज्ञा; सङ्कुलित-प्रमथगण-विलासं कैलासं यास्यामः; कतिपय-दिनेषु गतेषु भवानपि शिवाज्ञया भुवावजस्रं शिवगण-सन्तर्पण-पुरःसरं

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



श्रुति-स्मृति-पुराणेतिहासप्रमुख-निखिलशास्त्र-प्रतिपादित-सारतर-वीर-शैव-सदाचार-स्थापनोत्थापनोद्दीपनाऽर्थं सकल-विषय-प्रसृमर-धीकौशल्य-शालानां सुगुणमणि-मालानां सद्वर्तन-शीलानां सदाचार-जालानां चतुर्दश-विद्याऽभ्यास-लोलानां माहेश्वर-बालानां समस्त-शास्त्राऽध्यापन-रूपकं शिवाऽऽज्ञप्र-निजाऽऽगमन-कार्यमनिवार्यमापूर्य, समागच्छसि स्वमानसे ममाऽद्य वियोगः समासीदिति त्वमाऽऽधिं मा समावह, समावहेति वचन-निचयैर्भ्रम-वारणै उपविशद्भिर्मित्रोदय-समुपगताऽऽमोद-श्रीसुगुणषण्ड-पद्माऽऽकरं सप्रणय-रसपूरितं परिक्षुब्धं करडीश-हृदयमुत्क्षिप्य, बहिर्निस्सरत्-तदन्तर्गत-करुणरस-झरीवत्-सरीसर्पद्-बाष्प-परीवाहं च भो, वत्स! शान्त-स्वान्तोभवान्तः क्रान्त-श्रान्त्याऽलम्; कातरतया च बहिर्दृश्यमान-पाञ्चभौतिक-घटाऽभावेऽपि सन्ततं भवदन्तःपरिदृश्यमानो भवत्सकलकार्य-सहायतया भवद्भू-निवासाऽवधि भवता साकमेम वसामः; किं तयाऽनन्तया चिन्तयाऽऽशु सत्यं नित्यं सत्यं समं वसामः; स्व-नाम स्व-सामर्थ्यतः सुसाम-कथित-पदवी अनुगम्यमानः शिवाऽऽदिष्टमाचराऽऽचरेति भू-निवास-जनित-भ्रान्ति-निरासक-वचोभिः सक्तर्कैः कतकैस्तत्प्रसादयन् सुबोध जनित-सुज्ञान-ज्वलज्ज्वालयाचितं च विशोषयन् तं करडीशं सहज-प्रमोद-तरङ्ग-रङ्गदन्तरङ्गं कारयन् तदानीं भक्त-जालेषु निबिड-निष्पतद्-दन्तुर-कपोलेषु किमहो भवता वृथा व्यसनाऽनुसक्ता मा भवत; मरण-मिति किं? "यद्दृष्टं, तन्नष्टमि"ति प्रमाणात् परिगृहीत-काय-कवचं व्याधूय, सर्वत्रैव वसामो, भवदिष्टं ददामः; सत्यमिदं वदामः" इति सकलान् आनन्दयन् करडीशं विहाय, कथं यास्याम इति अश्रूणि मुञ्चन्निव निरवधिक-निजाऽऽनन्द-कन्दलित-बाष्पवृन्द-सुन्दर-नयनाऽरविन्दो योगीन्द्रः करडीशं मरिबसवं कुमारं प्रति, "भो, तनयौ! पुरःसरं, आगमिष्यमाण-शरणगणेभ्यो भवितव्योऽय चैक-रौप्यैका क्रमेण विक्रीत-विमलतर-भस्मघुटिका निक्षेपोऽस्मिन् मठ एवाऽस्मिन् प्रदेशे कर्तव्यः सभक्ति सश्रद्धं भवद्भ्यामिति निर्दिश्योच्चरन् सरभसं

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



समुत्थाय स विनयं साऽनुरागं साष्टाङ्ग–प्रणाम-पूर्वकं सतनय–करडीश-प्रतिश्रुत-वचन-सुधां श्रवण–पुटाभ्यां निपीय, अपरिमिताऽऽ–मादमन्तरा दधानः स्व-देहं कैलास-यानं कृतं चेद् वीरशैव–सदाचारे–ष्ववसान-क्रिया-लसत्-समाधिक्रियैकाऽवशिष्यते; तां कलितमनेन वत्सेन क्रियमाणां सर्वे भक्ताः समभ्यस्यन्त्विति वा सत्वरं सत्वरं जित-माहे–श्वर-पुञ्जैः पण्डित प्रकाण्ड–मण्डलैश्च समं करडीशेन विधिवदनुष्ठीय–मानाऽवसान-क्रियामनुभवन् कन्दलिताऽमन्दाऽऽनन्दो योगीश्वरः सभवत-माहेश्वर-सन्दोहे देह-कञ्चुकं त्यजामस्त्यजामुस्त्यजाम इति त्रिरुक्त्वा, सतनयं करडीशं सकरुणं निरीक्ष्यमाण एव लिङ्गैक्यतामवाप, भवाऽऽ–पद्धवाऽऽप–हरण-नवाऽऽपमुक्पयोदः ॥ ४८ ॥

आश्चर्यसार–भरितं चरितं तदानीं
योगीश्वरस्य कलितं दलिताऽन्तरायम् ।
दृष्ट्वा मुहूर्तममला सम- लाभ-तुष्टा
सा सर्व-संसद -मिता स्थिमिता बभूव ॥ ४९ ॥

भक्ताऽनन्तवधूहृदम्बर–चरच्छोकाऽति रेकाऽम्बुदो-
द्वर्षद्बाष्पझरी–कृताऽमित-जनाऽऽतङ्काऽतिपङ्काऽऽकुले ।
सम्भूते तु कठाऽङ्गणेऽलमिह तत्कार्यं त्वनार्यं यतीट्–
स्थाने चेति कुमार-बोधित-वचस्तत्माऽतिवाच्यायितम् ॥ ५० ॥

स्नाप्याऽथ मूर्तिममलां विमलाऽम्बु–पूरैः
स्थाप्याऽति भव्य–भरणाऽऽवरणाच्च पीठे ।
काषाऽम्बराऽति–लसितोद्भसितादिभिस्तां
सम्प्रीत-मानसमलं समलं चकार ॥ ५१ ॥

सुमञ्जुलैर्वस्तु-वर्गै- । मंठे तस्मिन् प्रसाधिते ।
कुमारेण तथा भक्तः । समयः सङ्घ-संयुजा ॥ ५२ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


उत्साहोद्धृत-भव्य-नव्य-रचनच्छत्रौघ-मञ्छादना
क्रान्त-ध्वान्तमुपागमिष्यदसुमद्-वृन्दाऽध्व-सन्देहदम् ।
भक्ताम्भोज मुखी-करावलि-कनन्नीराजना-राजि सं-
दीप्तैरुज्ज्वल-रोचिभिश्च विलयं प्राप प्रदीप-व्रजैः ॥ ५३ ॥

इत्थमनन्त-विधैर्योगीन्द्र-मही-महित-महिमाऽतिशय-प्रभावफलित-शुभावह-निज मनोरथ-जनित-प्रमोदभर-भरित भक्तजन-स्वतःकृत-विविध-विनियोगैः स्व-नियोगविरचित-स्नानादिकर्म-निर्मल-शरीर-विचित्रविविधाऽऽभोग-रचना-निचय-चतुरतर-भजकजनैः विधिवन्नि-र्मितां मङ्गलमय-जङ्गमपुङ्गव-सङ्ग-तरङ्गित-रङ्गद्रङ्गवल्ली-प्रणम-स्थापन-घनदीप-नवकुसुम-विसर-मालिका निकाय-सुकायमाना-दिभिः परिष्कृतां करडीशस्तथाविधां यथाविधि विरचय्य, तां पावन-मूर्ति-विचित्र-रचनाभिरसमानं सुमानं विमान क्रमाऽनन्त्य-कल्पितमा-रोप्य, पश्चात् पुरः पार्श्वयोर्विपश्चिद्भिरपश्चिमैः पावनाऽङ्गैः परि-पठ्यमान-शतरुद्रीयादि-मन्त्र-प्रकरैः सुकर-समुच्चार्यमाण योगीश्वर-भजक-जनाऽभीष्ट-प्रदानाऽपदान-प्रकरणैर्मुखरित-दिङ्मुखं समुद्पुष्य-माण-सन्ताड्यत्--काहली-पटह-भेरी-मड्डु-डिण्डिमाद्य-हृद्याऽनवद्य-वाद्य-घोषैर्विधुरं बधिरीकृत-दिक्कुम्भिकर्णकुम्भं जृम्भत्सम्भ्रम-सम्भृतं विधीयमान-परमोत्सवस्तां समाधिमुपनीय च नवतर-रचित-शिवभवन-वद् विराजते तत्र समाध्यन्तःस्थले तां परमहंसमूर्ति वीरशैवसमय-सौभाग्यनिधिमिव विधिवन्निक्षिप्य, सारतर-वेद-वेदान्तादि-शास्त्रपारो-दीरित-वीरशैवधर्ममनतिक्रम्य, महामहिम-योगीश्वर-परित्यक्तपावन-कायसदृशं समाधि-क्रियां समाप्य, समभावः स करडीशस्तदानीं वदान्य-शिखामणिः सदानन्दसम्पत्तिः स सौभाग्यस्य स्वमनः-समुन्नतेस्तद्योगी-श्वर-प्रभावस्य च सदृशं नानाविध-मानातीत-दानमनूनं विधाय, सुधा-यित-भाषया सकलान् आनन्दयन् श्रीनन्दनरत्न-सज्जीकृतं तदङ्गभूतम-भूतपूर्वमपरिमित-भक्तगण-शिवगण-समाराधनं समातनोदमान-क्षमा-निधिः ॥ ५४ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


ततश्च योगीश्वर सन्निदेशं
सद्वज्र-लेपायितमन्तरङ्गे ।
ध्यायद्रुतं कारयितुं गभीरं
गतं नितान्तायतमुद्यतोऽभूत् ॥ ५५ ॥

योगीन्द्र-निर्दिष्टतले सुगर्तं
त्वलङ्घनीयार्य-घनोपदेशः ।
शिलाऽनिबन्धैर्दृढलेपताद्यैः
स कारयामास सु-कारणार्थम् ॥ ५६ ॥

तदनु, तदनुज्ञाऽनुसारं धी-रञ्जितं करडीशेन क्षितौ निज-भजक-जनता-घन-तापकारक-निटिलतल-लिखित-विधि-दुर्लिपि-लुम्पनार्थं प्रमथगण-प्रेषित-शिवसिद्धघटिका इव भस्मघटिकाः समादिष्ट-क्रमाऽनुसारं कुमारेण समानेता क्षमातल-समागत-शरण-समाजार्थं धरा-निक्षिप्त-तज्जीवनीय-निधिमिव लोभाद् वसुधाऽन्तर्निधाय, गोपित-निजकीर्ति-द्रविण-पुञ्जमिव रञ्जितास्ताः सम्यक् साऽनुरागं सभक्ति सश्रद्धं शरणगणाऽर्पणमस्त्विति प्रतिश्रुत्य, बन्धुरं निक्षिप्य तदुपरि चतुरस्र-दृढतर-प्रस्तरं प्रस्थाप्य, तदुपरि प्रावृषेण्यकादम्बिनी-प्रवर्षद्-धारा-जन्यैरन्यैरपायैश्च बाधा मा भूयादिति प्रसक्ताऽतिदार्ढ्य-विशालशिला-मण्टपं विरचय्य, परिकल्पित-भसित-निक्षेपोऽद्याऽप्यनवद्योऽभेद्यो हृद्यो विद्योतते ॥ ५७ ॥

अथेदानीं दानीन्द्रस्य करडीश्वरस्य काचित् प्रवृत्तिः सकल-राज-पुरुषाणां पूज्य-मनीषा समुत्पादिनी मेदिनी प्रमोद-जननी जन-नीत-विस्मय-भृशं प्रशस्यते ॥ ५८ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



क्षोणीवल्लभ-शालिवाहन शकाऽञ्चत्काल-संवत्सर-
व्यूहाऽऽक्रान्त-सहस्र-सप्तशत-संख्याकाऽब्द-सङ्घात् ततः ।
अष्टाऽशीति सदङ्क-भाक्क्षय-समाख्याऽब्देति तापःप्रदो
धात्रीकम्पन-कारकः किल महा क्षामोऽति भीमोऽजनि ॥ ५९ ॥

क्षयाऽब्दस्त्वभवत् पूर्व- । परशब्द-विपर्ययः ।
स सप्तमी बहुव्रीहि- । शब्दोऽब्द-क्षय इत्यसौ ॥ ६० ॥

ततः स शाल्यभावेन । धान्याऽभावोऽभवद् भुवि ।
द्रु-वल्यभाव-सद्भावे । फल-भावे तु का कथा ॥ ६१ ॥

क्षय-संवत्सरो लोके । बहु-धान्यः कथं भवेत् ।
ततः क्षयाऽब्दोऽभवद- । बहु-धान्यो भृशं ततः ॥ ६२ ॥

भीमे क्षामे निकामं प्रतिदिनमशनाऽभावतः क्ष्मात्रतिष्ठा-
ल्लोकाऽनीका हि भीकारक-सुख-लव-संलोप-सन्ताप-खिन्नाः ।
भीष्म-ग्रीष्मादि-तप्यत्तपन-खरमहः शोषिताऽशेषभाग-
क्षीण-क्षोणीजवल्ली-ततिरिव वितत-म्लानताऽऽधान-कायाः ॥ ६३ ॥

ततः सकल-देशनिवसच्चर-निकर-मधुकरप्रकराः समयपर-महिमाऽतिशयान्निखिलपद्माकरेषु सङ्कुचित-पद्मेषु भास्वल्लोकबान्धव-शिवप्रभाव-नित्य-विकस्वर-स्वपरिसर-भासवच्चर-शिलीमुख-निचयाऽऽनन्दकर-कलिताऽचलित-कमलाकरं करडीश-शालं विशालं सलीलमासाद्याऽऽसाद्य दिने-दिने प्रावृषेण्य-ज्वलदकदम्ब-प्रवर्षद्बहुलाऽऽसार-विजृम्भद्धुनीकु-बन्धकबन्धवद्-वृद्धिमापद्य क्रमेण षट्सहस्रसंख्याका हि करडीशरागसागराऽमृतकराः किल धरातल-चरा गणवरा सुरुचिराश्चराः परे विरेजिरे ॥ ६४ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


यथा यथा वृद्धिमगाच्चराली
तथा तथाऽसौ करडीश-तोषः ।
सापत्य-हर्षो ववृधे वसन्ताऽऽ-
गमेन सर्वो हि यथा वनौघः ॥ ६५ ॥

नैवाऽभजत्कमपि संशयमेष चित्ते
वित्त-व्ययो बहुतरो भवतीति तर्कः ।
नैवाऽभवच्च हृदि निर्वहण कथं स्या-
देतस्य चेति न मनागपि याचनाऽभूत् ॥ ६६ ॥

नित्यं सहस्रचर-सञ्चय-तर्पणाऽञ्चत्
काले त्ववर्तत यथा करडीश-चेतः ।
प्राक् षट्सहस्र-चरतर्पण संविधाना
कालेऽप्यवर्तत तथैव विचित्रमेतत् ॥ ६७ ॥

नैष भारोऽभवत् तस्य । शिवांऽशस्य महात्मनः ।
धरा धुरन्धरस्याऽद्रे- । र्भारस्तरुलता वलेः ॥ ६८ ॥

साकं सुमोद-भरितः करडीश्वरोऽसौ
पुत्रेण चित्रकरकौतुक-निर्भरेण ।
पत्नी-स्नुषा-द्वय-नयाऽतिशयात् प्रयास-
भावः सुखेन विदधे चर-संघ-सेवाम् ॥ ६९ ॥

तदानीमेव निरन्तरमलिङ्गिभ्यश्चिरमन्येभ्यो वृत्ति-शून्येभ्यो जना मान्येभ्यो किञ्चनेभ्यः स्वस्य सर्व-जीवदया-परत्वादन्नपिण्डः प्रदापन-गृहेऽपि स्वाऽवनोज्जीवना भावनानास्थल धावनादप्यनशनाः कुशलज-लोपाद् विकृतरूपा वितततापाः खले कलविंक-वायसादि-सम-वाय इव मिलिता गलिताऽन्य-सश्रया दलिताऽन्तर्धृति-भिन्न-मानसाः चलिता गलिताऽऽत्म-बुद्धयः फलिताऽघ-प्रसराऽतिदुर्दशा भृशं कृशास्तेऽपि

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



षट्सहस्रसंख्याका। करुणारसावरणाऽन्तः-करणेन करडीशेन सदयं प्रदापित-जठर-पर्याप्त-सोपस्कराऽन्नपिण्ड-प्रतृप्तास्तुष्टा गलित-कष्टाः स्वस्थास्तस्थुः ॥ ७० ॥

नैतदप्यभवद् भार- । स्तस्य शान्ति-रसाऽम्बुधेः ।
प्रविशत् तटिनीयाऽदो । वारो भारो हि वारिधेः ॥ ७१ ॥

तथा तस्मिन्नेव विस्मयनीय-समये प्राचीदिशः केचित् प्राचीन-दुष्कृताऽलि संगता किञ्चन तादार्थ्यहता हि दुर्गता नाना जातीयाः केनाऽपि प्रकारेणाऽन्नाऽलाभात्, लोभात् क्षोभाऽऽकुलाः क्षुद्बाधामसह-मानाऽतीत-दुर्वर्तन दत्त-चित्ता बल्लारि-नामकपुरी-गरीयसी-परंत-धनिकजना हि तत्रत्यधनिनां धनान्यहन्येवाऽऽहरामस्तत्कृते राजशिक्षा घटिता चेदनायासेनाऽन्नं लभ्यतेऽथवा सहृताश्चेत् सर्वं शान्तं भवत्येवेति निर्धार्य, निर्भयं पर्जन्यवद् गर्जन्तः पुर-समीपं समागता यदा तदा प्रवृत्ति निशम्याऽक्ष-दर्शक-प्रमुखाऽधिकृत्-कृते सेनाधिपतिमाहूय "पञ्च शताऽश्व-वारैर्गत्वा, तान् प्रशासयित्वा, समानय; बन्दीकरिष्यामः" इत्यादिशत्सु, तथाऽऽहूतः स यातस्त्वखिलैर्दूरत एव शिलाभिस्ताडितः सपरिवारं भीतः पुनर्निवर्त्य, जीवग्राहं गृहीत्वाऽऽनयनमसाध्यम्; तत्रैव मारयितुं राजाऽऽज्ञा दत्ता चेत् सर्वान्निर्वापयामीति तस्मिन्नित्थं कथ्यमाने तत्रैकं मारयितुं नाऽस्माकं शक्तिः किमत्र कुर्मः ? इति चिन्ता परतन्त्रेषु तेषु नागरिक-धनिकजनेषु बहिर्द्वाराण्याबध्य, गृहान्त-र्दाराऽपत्याद्यनीकैः साकं शोकाऽऽकुलेषु तदा महाप्रभावाम्बुनिधिः करडीश्वरः परिकलित-षट्सहस्र-चरगण समाराधन-महोत्सवे संसक्त-करुणा-करणिकयाऽऽकर्ण्य, तूर्णमभ्यर्णगतं पूर्ण-विनय तनयं विनियुज्य, तस्मिन् कर्मणि वत्सवत्सलतया भिया धिया नयाऽञ्चितश्चर-सेवां सानुरागं जागरूकतया समाचर; इत्युक्त्वा, गृहाऽऽच्छादिनीमारुह्य, तमुल्लोल-शरधि-कल्लोलवद् दूरूह-व्यूह-मालोक्य, हस्तमुद्यम्य, "भो,

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



भो, यूयं के ? किमर्थं इत्थं साहसश्च ? इह सन्तिष्ठत ! सन्तिष्ठित !" इत्युच्चरन्तेषु स्वकीयात् कस्माच्चित् पूर्वं विदितात् करडीशं विज्ञाय, अस्य महत्मनो वाक्योल्लङ्घनं घनं नेति तत्सङ्घनायकेषु षोडश–जनेषु सविधमागत्य, "भो, दयानिधे,! नित्यान्नदानदक्ष! दीनबन्धो! न वयं चोरा:; घोराऽनिवार्य–क्षुत्पीडां सोढुमक्षमा: क्षमा–रहिताश्चैतद्भङ्गीमङ्गीकुर्म:" इति व्याहरत्सु तदा परम–कारुणिकतया "भो, मुग्धा: ! जन्माऽन्तरेष्वपि तापकारकमीदृक्पापकार्यं त्यजत; क्षामाऽन्त-पर्यन्तमन्न पर्याप्तं दास्यामि" इत्थं कथयन् प्रथमान–कीर्ति: स्वयं सकलमनीषित-दाताऽपि जाताऽऽदरस्तै: दुष्कृति–त्यागाऽङ्गीकार-वाग्दानं निदानं तदाऽऽनन्ताऽनर्थ-समवाऽभावस्य, इत्यादाय मोदाय तेषां "मया समं समागच्छत" इत्युक्त्वा, तान् आनयन् स्नान–पानाऽनुकूल-मधुर-पानीय–भरितस्य महा-तटाकस्य तीरं श्रीरञ्जिताऽनेक-तरुच्छाया-शीतलित–प्रदेशं सविनिवेश्य, तत्र तदानीं शिवगण-समाराधनं समाप्य, समागतं कुमारं समालोक्य, "त्वमस्मिन् दिने चिरं क्षुत्पीडिता कियद्-धान्यमपेक्षन्ते ? किञ्चित् तदधिकं दिश; पाक–सामग्रीं सज्जीकुरुत; एत आत्मान एव पचन्तो भुञ्जन्ति, तेषां समक्षम् अघटनीय-घटना–पटीय समादिश्य, बालेभ्यो मनीषितं फलं दत्वा, स्थलाऽन्तरं गम्यमान-ससारीव तं साहसांकं दत्वा तै: सन्तोष-प्रणाम–पूर्वकं गमनाऽङ्गीकारं विन्दन्नमन्द_राजपुरुषसन्दोह-बन्धुरां प्राड्विवाकाऽक्षसभां गतस्ततस्तेषां इतिकर्तव्यताक्रमतिरिक्ततया गतकान्तिमुखानि दिवा सुधाकर-सखानि, आलोक्यैव हि कुतो मन: सम्भ्रम. ? तान् सान्त्वयन्नित्थं समागतोऽहमिति पूर्वं श्रुतं सुवाचा विशदीकुर्वन् सर्वं च तेभ्य: क्षामाऽन्ताऽवधि दास्याम्यन्नमिति वचो दत्तम्. अस्मै क उपाय: ?" इति स्वोक्तेरित: परं किमसाध्यम् ? राजधान्यै विज्ञाप्य, वित्तमाहराम; तथैव समाचराम इति तत्प्रत्युक्तिमाकर्ण्य, कियानयं विधि: ? प्रयासस्तादृक् कुत इति वदन्, स्वान्तस्तत्तत्त्वं विदन् मया सर्वेषामुपकार: किञ्चित् किञ्चित् कृत:, कदापि

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


धनवज्जनानामितराऽनपेक्षिततया कोऽपि नोपकारः कृत इति स्वस्य विश्वोपकारक-पदवी-दवीयः पान्थत्वात् तेभ्य इदानीं पुण्य प्रदानरूपः सकर्तव्य इति निश्चित्य, राजपुरुषैरालोच्य, स्वाऽनुकूलैस्तैः तान् धनिकान् सम्पूर्ण-धान्य-धन-कनकान् आहूय, तान् पूर्वजन्मनीवाऽद्याऽपि पुण्यकार्यं कृतं चेत्, इतः परं धनाऽऽढ्याः शिवप्रेम-पात्राणि च भविष्यथ; क्षामकाल-कृताऽन्नदानपुण्यं तु सुक्षेत्रवद् विशेषतः फलतीति बोधयित्वा, रोदयित्वा च नित्यमहं द्विशत-प्रस्थ-परिमित-धान्यानि ददामि; भवन्तो भवद्योग्यतामतीत्य ददन्त्विति" गदंस्तान् सन्तुष्टमधिकृत्-सनक्षम्, अङ्गीकार-परतन्त्रान् कृत्वा, निरन्तरमित्थं निरन्तरायं तेषां द्वादश-सहस्राऽकिञ्चन जनभरण-पर्याप्तं धान्यानि संग्राह्य, नित्यं तेभ्यः षण्मासाऽन्तं क्षामात्ययाऽवधि दापयन् क्षुत्तापं लोपयन्नन्नेन तृप्तिं प्रापयन् लोपयामास ॥ ७२ ॥

त्वत्तोऽस्मदीयाऽद्यतनं च कार्यं
मान-प्रधानत्वमिदं समस्तम् ।
स्थाने किलेत्यार्य तदाऽधिकारि-
व्यूहास्तमालोक्य भृशं शशंसुः ॥ ७३ ॥

न केवलं दुर्गत-वर्गमेन-
मपालयोऽस्मानपि दीन बन्धो ! ।
आपालयोऽस्माकमपायमुच्चै-
रपाकरो राजदवार कीर्ते ! ॥ ७४ ॥

ते तस्य वीक्ष्य चरितं परितः पवित्र
चित्रीयमाण-हृदयाः सुदयाऽम्बुराशेः ।
नो मानुषोऽयमतुलः श्रित-लग्न-भावो
देवोऽतिरक्तिरवनेरवनेऽवतीर्णः ॥ ७५ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


इत्याकलय्य नियताऽभयतः समस्तं
तेनोक्तमेव विहितं स्वहितं किलेति ।
कर्माऽऽचरंश्च सुतरामितरा निवार्याः
सद्राजकीय-विसराः ससुराग-चित्ताः ॥ ७६ ॥

क्षामाऽन्तमेतच्चर-षट्सहस्र-
स्तोमाऽति-सन्तर्पणमानितन्वन् ।
क्षेमात् प्रयाणाऽवधिक स्वतः सु-
प्रेमाऽऽतनोत् तच्चर-सङ्घ-सेवाम् ॥ ७७ ॥

क्षामे प्रभूतेऽन्त्यमर्गे तदाद्य-
दीर्घे च या सा करडीशमास ।
ततोऽस्य तद्रूप-भृतो भवेत् का
भारो जगत्यस्ति स कः क्षमायाः ? ॥ ७८ ॥

इत्थं श्रीकरडीश-भव्य-चरितं भूयः स्वकीयैः समा-
कर्ण्य श्रीविकटोरि नामक-महाराज्ञी ह्यभिज्ञेश्वरी ।
किं देयं त्वपरिग्रह-व्रत-भृते देव-प्रभावाय चे-
त्याढ्या चोदयदादरान्निज-नमः पत्रं विचित्रं करम् ॥ ७९ ॥

तत। जातु किमप्यन्य- । दत्यद्भुत-करं वरम् ।
कर्माऽभूत् करडीशेन । तेन साकं तनूभुवा ॥ ८० ॥

आन्तर्वत्नी प्राड्विवाकस्य पत्नी
त्वन्तस्तापेनाले खिन्ना प्रसूत्यै ।
क्रान्तेर्वैद्यैः सच्चित् क्रिलाक्तताऽपि
शान्तिर्नाऽऽसीदन्तरायाऽतिरेकात् ॥ ८१ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



वैद्यैर्भैषज्य-भेदाऽधिगम-सकल-दुर्वाररुग्-वारणाद्यै
देहान्तर्गूढ-तत्त्वाऽऽकलन-जनकसद्यन्त्र तत्तन्त्रशूराः ।
एवं प्रौढाश्च मूढाः प्रगत-परिभव-क्लेश-भग्नाऽऽशयास्त-
न्नारी चाऽऽसन्न-संस्थायित-विषम-दशा तद्धवो वृद्धभेदः ॥ ८२ ॥

ततोऽञ्जसा श्रीकरडीश्वरोऽसौ
कुतोऽपि हेतोः श्रित-पारिजातः ।
स्वतोऽभियातः सदनं परार्थं
कृतोद्यमः प्राह सतोषमेनम् ॥ ८३ ॥

कस्मादिदं दुःखममोघमकार्यं
प्रचार सम्ब्रूहि विचार-सिन्धो !
इतीव पृष्टः स विशिष्टमाह
स्पष्टं प्रकृष्टं दयिताऽतिकष्टम् ॥ ८४ ॥

त्यज निज-परितापं; मत्तनूजोऽस्ति मोदं;
भज भजदखिलार्त्तिं; भित्ति-सम्पत्ति-सर्वाम् ।
रुजमज-मुख-दुर्गां प्रेषयाम्यङ्ग-धूताऽ-
ङ्गज-गजमुख-तातं वन्दयाऽऽनन्द-कांक्षी ॥ ८५ ॥

इत्थं निगद्य सहसा सदयाऽम्बुराशि-
र्गेहं प्रपद्य तनयाय च सूचयित्वा ।
सर्वं यथाद्य भवतोऽभिमतं तथैतत्
सम्यक् समाचर किलेति तमादिदेश ॥ ८६ ॥

यथाऽदिष्टः पुत्रः पितृ-वचनमेवाऽत्र सकल-
क्रिया-सिद्ध्यै मन्त्रस्त्विति मनसि सन्धाय नियतम् ।
तथा नीत्वा पात्रे चर-पद-पयस्तेन घुटिका-
त्रयं बद्ध्वा मूर्तं तदुभय-समञ्चत् करयुगम् ॥ ८७ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


गत्वा तं प्राड्विवाकं भय-भर-भरितं मुञ्च, चिन्तां नितान्तं;
विन्दाऽऽनन्दं त्वमन्द्रं; घनतनयजनिः सद्य एवाऽद्य हृद्या ।
स्यादित्यादित्य-भास्वत्कर इव नलिनीमेत्य तां दुर्दशां तं
प्राप्तामार्येतनजार्तिं भज मुदमिति तेनाऽऽहिता सा हितार्थम् ॥ ८८ ॥

उन्मीलन्नेत्रपद्मा सपदि समभवत् सात्म-सान्निध्यतः सत्-
सङ्गः सौख्यावहोऽत्रेत्यभिनयति किलेवाऽङ्ग-चेष्टां दधाना ।
व्यावृत्याऽऽस्यं च तच्चोदितमनुसरती सम्पिभाती पदाम्भो
भुञ्जन्ती ताश्च तिस्रः खलु लघु सुषुवे डिम्भमुज्जृम्भमाणम् ॥ ८९ ॥

पुत्रोदयात् सम्मद-शोभमाना
मित्रोदयोद्भासित-सत्प्रदेशा ।
आशेव पूर्वाऽधिकृतस्य चेत
पयोरुहंसं विकच तदानीम् ॥ ९० ॥

ना सूतमेऽसौ तनयं वधूट् सा
तस्याऽनुकम्पा करडीश-सूनोः ।
तस्यास्त्वभावे क्व सुतः क्व भार्यो-
त्साहाऽधिकारी कुतुकाऽऽकुलः सन् ॥ ९१ ॥

राजद्रूप-समञ्चिता च युगपत् सत्यामपत्यं महाऽऽ-
श्चर्यं सर्वजने कलानिधि-भिषग्वारे निवारत्रपाम् ।
मोदं चाऽधिकृते सुभक्त-निवहे मान्यत्वमन्यादृशं
तस्य श्रीकरडीश-सूनु-महिमा सूताऽति-पूता तदा ॥ ९२ ॥

तदा कुमाराऽङ्घ्रि-सरोज-युग्मे
प्रणम्य मोदाऽम्बुधि-मग्न-चित्तः ।
स प्राड्विवाको विलसद्विवेको
ह्यनीनयत् तं निलयं स्वयं ततः ॥ ९३ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



डिम्भोऽसौ करडीश-भव्य-कृपया जातः प्रभूत-श्रिया
तस्मात् तस्य सुनामधेयमुचितं ह्येतस्यमो तस्य तत् ।
इत्यालोच्य च दम्पतीतर-जना भूयः स्वकीयाः परं
ते भल्लूक इति स्फुटं तमनयन् नाम-प्रकाम-प्रियम् ॥ ९४ ॥

तदनु, कतिपय-दिनेषु गतेषु स मरिबसवाऽऽख्यः कुमारः क्षमा-निधिरुमाधव-समादेशतः क्षमातलमपास्य समान-प्रमथगण-समाजं गन्तुकामो भूमौ स्थितोऽपि कामारि-सभा-सम्बन्धिनीं प्रमथाः समागच्छन्ति, एष समिच्छन्ति, शिवमित्थं पृच्छन्ति, पुनर्गच्छन्ति परमुमा-महेश्वराविदं मुदा वदत इत्यादि-कथां कथयन्नयं महानुन्माद-रुगाक्रान्त इति तदनभिज्ञैर्विज्ञातस्त्वीदं बहुजन-विहारावह महागृहं विहाय, विजन प्रदेशाऽन्तरे विनिवेशितव्य इति केनाऽपि सम्बन्धेन श्वशुरस्य शिवोप-पदचिन्नपाख्यस्य मन्दिरमधिनिवेशितस्तत्रैव स्थितः सन् श्वः प्रातर्महेश्वरो माहेश्वर-रूपमावहन् समागतो मदभीप्सित ददासि वेति वदन् मुदा तदा लिङ्गार्पिताऽनन्तरं तत्कार्यमिदमिति सनय-करडीश्वर-प्रत्युत्तरमाकर्ण्य भीकरं लिङ्गार्पितमनिशमत्रैव भवत्येव किं तेन यच्छसि वा नवा गच्छामीति स्वच्छन्दं व्याहरन्नस्मिन् महात्मनि, उक्ति-प्रत्युक्ति-प्रसङ्गो न सङ्गत इति भीतेन करडीशेन सत्प्रयत्नाऽनुगुणं चेद् ददामीत्युक्तो हसन् भक्तोक्तमनपरमसाध्यं याचे तद् वदामि ददामीति प्रणामं विधेहीति गदन् तथैवाऽस्त्विति तेन नमस्कृतः स माहेश्वरो नील तन्तु-रेखाऽञ्चित-वस्त्राऽन्तरे पञ्च भस्म-घुटिका निबध्य, ददस्वेत्युच्चरन् सच्चरेन्द्रः किमप्येकं निमित्त-मिदमिति निर्धार्य, तस्मिस्तथा कुर्विति तदाऽयं गत इत्येतत् प्रवृत्ति चिन्नपाऽऽख्येनाऽनुभूतां स मरिबस-वार्यस्तत्र स्थित एव समक्षं वीक्ष्यमाण इव तान् कथयन्, आश्चर्यं प्रथयन्, स माहेश्वरो महादेव एव मदभिगमनाय यजमानमङ्गीकारमादाय गतश्चैतद् दिनात् नवमदिने समागते तदानीमेव कैलासं यास्यामीति मुहुर्मुहुः सानन्दं व्याहरन् केनाऽप्ययमुदन्तः कथितः स्यात्, स रोग एव प्रवृद्धस्तत इत्थं वदतीत्यभिमतश्च ब्रह्मगिरि नामक गिरि-स्थित-चरो

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


निराकरोतीमां रुजमिति चिन्नपाख्यादिभिरुक्तो हसन् "मत्समाधिस्थल-मन्यत्राऽस्ति; तत एव भवन्मनीषा, इत्थं प्रवृत्ता; तथाऽस्तु; गच्छाम" इत्युक्त्वा, बसवलिङ्गाऽम्बया साध्व्या चिन्नपाख्यादिभिः साकं सज्जं रथमारुह्य, निखिलाऽऽशावर्ज्यं शिव-शिव-शिवेति पर्जन्यवद् गर्जन् निर्जगाम ॥ ९५ ॥

मार्गे स्वाऽनुगतं चराऽर्भक-युगं रुद्राक्ष-भस्मोल्लसत्–
काषायाऽम्बर-रञ्जितं बसवलिङ्गाऽम्बाऽवलोक्यादरात् ।
भृत्यं प्राह द्रुतं समानय रथं चाऽऽरोहयित्वा पुरो
गच्छामस्त्विति तां हसन् घन–चिदाधारः कुमारोऽब्रवीत् ॥ ९६ ॥

मुग्धे कृतः प्रयासोऽयं । तूष्णीमनुसराऽयनम् ।
क्व ते भृत्यः ? क्व चाऽऽह्वानं ? । क्व ते सच्चर-पुङ्गवौ? ॥ ९७ ॥

यथा मनोरथं तेऽद्य । समारूढौ चरेश्वरौ ।
रथं यदि तथाऽऽरूढौ । तद्भारमयमावहेत् ॥ ९८ ॥

त्यक्त्वा तदाशामागच्छ; । तूष्णीं सरल-मानसे ।
इति ब्रुवाणे भक्तार्ये । चिन्नपाख्य–मुखास्तदा ॥ ९९ ॥

इदं पश्याम इति ते । समालोच्य परस्परम् ।
आकारयध्वं प्रेम्णा तौ । नाऽऽगतौ यदि साऽऽदरम् ॥ १०० ॥

गृहीत्वाऽऽनयतैनं तौ । रथमारोहतान्मुदा ।
इत्थं नियुज्य तान् भृत्यान् । प्रेषयामासुरादरात् ॥ १०१ ॥

गतेषु तेषु भृत्येषु । चर-युग्मं प्रभावितम् ।
धावितास्तान् वञ्चयित्वाऽ– । न्तरधादिन्द्रजालवत् ॥ १०२ ॥

ततश्च विस्मताः सर्वे । लीनं स्यात् कुत्र वा हि तत्
इति निर्धार्य निर्जग्मुः । किञ्चित् सन्दिग्ध–मानसाः ॥ १०३ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


ग्रामे कस्मिन्नुषित्वाऽथ । प्रातरुत्थाय पावनी ।
तदन्तिक-नदी-तीर- । सङ्गमेशालयं गता ॥ १०४ ॥

सती बसवलिङ्गाऽम्बा । साऽनन्याऽऽसक्त-मानसा ।
नितान्त-चिन्ता-संक्रान्त- । प्रार्थयामास भक्तितः ॥ १०५ ॥

मदार्यं-रुक्-परित्यागो । भवेत् चेत् पुनरागता ।
सहस्र-गणसन्तृप्तिं । तनोम्यत्रेति सादरम् ॥ १०६ ॥

पश्चाद् भागं सुमेत्याऽथ । कुमारः प्रार्थना-वचः ।
श्रृण्वन् मुग्धे ! प्रार्थनीय- । मित्थं न भ्रान्त-चेतसा ॥ १०७ ॥

मम (प्रसादोऽयं) । शम्भोरपि च सम्भवेत् ।
अभाव्य-प्रार्थना प्राज्ञै- । र्न कार्या ह्यविचार्य सा ॥ १०८ ॥

यद् भाव्यं तद् भवत्येव; । नाऽभाव्यं भवति क्वचित् ।
पर्जन्याऽऽह्वान-मन्त्रेण । तपो-वृष्टिः किमुद्भवेत् ? ॥ १०९ ॥

शिव-प्रार्थनया काम्य- । दापदां विवृतिर्भवेत् ।
शिव-निर्मित-निर्मोघ- । शासनं को निवारयेत् ? ॥ ११० ॥

शिवाऽनुकूलतः किञ्चित् । कार्याणि प्रभवन्ति हि ।
वापी-कूप-तटाकादि- । वद् न वा वाहिनी भवेत् ॥ १११ ॥

अतोऽद्य भवती सम्यक् । प्रार्थयेदं हि मत्प्रियम् ।
शिव-प्रसादेन साधु । सिद्ध्यत्येव न संशयः ॥ ११२ ॥

अत्रैव माङ्गल्य-तन्तु- । नानाऽऽभरणमेव च ।
त्यक्तुं प्रसीद देवेश ! । त्यजामीति मुदा मुहुः ॥ ११३ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


इति भर्तरि सम्प्रोक्ते । चिन्ताऽऽक्रान्ता च सा सती ।
कम्पमानाऽधर-दला । रुरोद पति-भक्ति-भाक् ॥ ११४ ॥

अन्तर्दुर्वार-सन्तापा । चुक्रोश कुररीव सा ।
ततः कुमारः कृपया । सान्त्वयन् प्राह सादरम् ॥ ११५ ॥

अस्मिन्नसारे संसारे । सारः कोऽस्ति विचार्यताम् ।
मुग्धे ! वृथा त्वं दुश्चिन्ता- । सन्तापं मा भजाऽधुना ॥ ११६ ॥

नश्वरं सर्वमेतच्च । प्रियाऽपत्य-धनाऽऽदिकम् ।
त्वङ्गत्तरङ्ग-संरङ्ग- । दृङ्गणोऽपि मतं किल ॥ ११७ ॥

गर्भस्य धारणे कष्ट- । मपत्य-प्रसवेऽपि च ।
प्रसूतानां रक्षणे च । कष्टं तन्मरणं यदि ॥ ११८ ॥

प्रियाऽत्यये तथा कष्टं । बान्धवानां मृतौ तथा ।
मया यथा तवेदानीं । न संसारे सुखं क्वचित् ॥ ११९ ॥

अयं देहोऽपि मलिनो । मल-मूत्रकरं भितः ।
हेय-द्रव्य-समाकीर्ण- । नव द्वाराऽनुवेष्ठितः ॥ १२० ॥

तथाऽपि शाश्वतो नैव । काल-मृत्यु-वशंगतः ।
एकोत्तरं हि यन्मृत्यु । शतं तद्वेष्टनाऽऽलयः ॥ १२१ ॥

तत्र चाऽऽगन्तुकाः केचित् । तेषां मन्त्रौषधादिभिः ।
जप-दानौषधमुखैः काल-मृत्युर्न कैरपि ॥ १२२ ॥

एवं-विधे हि दुर्देहे । मोहः कार्यो न धीयुजा ।
असुखे किल संसारे । सुखं त्वाभास एव हि ॥ १२३ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



सुखाऽऽभासस्य सुखता । कथं सम्प्रतिपद्यते ? ।
चन्द्राऽऽभासः कथं चन्द्रः । सुधाऽऽभासः सुधा कथं ॥ १२४ ॥

अज्ञान-तमसाऽन्धानां । विषयास्त्वमृतोपमाः ।
शिवाऽऽनन्द-रतानां तु । विषया विषमेव हि ॥ १२५ ॥

एतादृशेचसंसारे । मा कांक्षां कुरु सर्वथा ।
दुःखाऽम्बुधिं च सन्तर्तु- । रेकां नौकां वचः श्रृणु ॥ १२६ ॥

असारेऽपि च ससारे । सारमेतत्-त्रयं खलु ।
गुरु-सेवा च लिङ्गाऽर्चा । चर-सन्तर्पणं तथा ॥ १२७ ॥

अयं हि चित्क्रिया-मार्गः । शिव-सन्निधि-दर्शकः ।
भक्तानां मोह-मुक्तानां । शिवाऽऽनन्द-सुख-प्रदः ॥ १२८ ॥

मनः कर-स्थेष्ट-लिङ्गे । मुखे पञ्चाक्षरी मनुः ।
फाले भस्म-त्रिपुण्ड्रं च । गले रुद्राक्ष-मालिका । ॥ १२९ ॥

गुरु-सेवा तु कायेऽस्मिन् । चर-सन्तर्पणं तथा ।
यस्य प्राण-सखं नित्यं । तस्य वश्यः शिवः सदा ॥ १३० ॥

एतन्मार्गे दत्त-चित्ता । भव; निश्चिन्तया धिया ।
घोर-दुष्पार-संसार- । कान्तारं सुखतस्तर ॥ १३१ ॥

एवं सद्बोध-पीयूष- । पानात् तापमपाकरोत् ।
स तस्या दुःख-जलधेः कुम्भजीभूय सादरम् ॥ १३२ ॥

एतत्-पञ्चाक्षरी शैवी । सर्व-सिद्धि-विधायिनी ।
संसार-तिमिराऽन्धानां । शिव-दर्शक-दीपिका ॥ १३३ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


शिव–राजद्–राज-घन– । क्रीड़ा–वाद–सरः परम्
शिव-प्रसाद–पीयूषा । प्रसवाऽमर–धेनुका ॥ १३४ ॥

इत्युक्त्वा तत्र विजने । पवित्रे च शिवाऽऽलये ।
मन्त्रोपदेशमतनोत् । विधिवत् करुणा–निधिः । ॥ १३५ ॥

पतिव्रतानां नारीणां । पतिरेव गुरुर्यतः ।
पतिरेव शिवः साक्षात् । पतिरेव व्रतं महान् ॥ १३६ ॥

तदा बसवलिङ्गाऽम्बा । तीर्ण–दुर्मोह–सागरा ।
शिवाऽऽनन्द–रसाऽऽस्वाद– । भर–सन्तृप्त–मानसा ॥ ३७ ॥

कुमार–वदनाऽम्भोज– । स्थिता शिव–कला हि सा ।
सा तस्या वदने रेजे । दर्पणे प्रतिबिम्बवत् ॥ १३८ ॥

ततः परं चिन्नपाख्य– । प्रमुखाश्च समागताः ।
तौ समालोक्य सम्भूय । सर्वे ब्रह्म–गिरिं ययुः ॥ १३९ ॥

तत्रत्येन चरेणाऽथ । चिकित्सा बहुधा कृता ।
काय–भोग इति ज्ञात्वा । कुमारोऽङ्गीचकार ताम् ॥ १४० ॥

उषित्वा तद्दिने तत्र । तद्ग्रामं पुनराययुः ।
तत्र वाणी कुमारस्य । सान्द्रा शिव–परा तदा ॥ १४१ ॥

अस्य प्रसङ्ग-रहिता । निःससारा विलम्बितम् ।
प्रावृट् पयोद-संवर्षद् । वर्षाऽऽसार–झरीव सा ॥ १४२ ॥

एतच्चर्यां समालोक्य । सर्वे सङ्कुचिताऽऽशयाः ।
नैष रोगोऽस्य महतो । वाक् तत्थ्येति तदा विदुः ॥ १४३ ॥

ततः कुमारस्तान् प्राह । तीव्र–गम्भीरया गिरा ।
मा माकारयितुं सद्यः । प्रमथा हि समागताः ॥ १४४ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



श्वरेवाऽहं साऽम्ब-सभां । गमिष्यामि न संशयः ।
(गत्वा तत्र समस्तं मद्- । वृत्तान्तं कथयाम्यहम्) । १४५ ॥

ततश्च यजमानं सं- । मानयध्वमतित्वरम् ।
तथाऽस्त्विति तदानीं ते । तथा चक्रुर्यथेप्सितम् ॥ १४६ ॥

कुमारस्या न्तिकं सद्यः । करडीशः समागतः ।
तद्दिनं प्राक्सूचितस्य । दिनस्य नवमं तदा ॥ .४७ ॥

जङ्गमाऽऽराधनं कर्तुं । सामग्रीं च यथाविधि ।
सज्जां ततानाऽऽशु तदा । कुमारो गुरुणा समम् ॥ १४८ ॥

सम्यक् स्नानादि सत्कर्म । समाप्य समयोचितम् ।
नत्वा पित्रा समालिङ्ग- । समर्चां सहसा चरन् ॥ १४९ ॥

पादोदकादिमासेव्य । वीरशैवाऽध्वगाऽग्रणीः ।
पित्रा समं भक्त-वर्यै. । सत्या निश्चिन्तया तया ॥ १५० ॥

माहेश्वराणां भक्तानां । तन्वन् सन्तर्पणं तथा ।
ताम्बूलमथ सन्धत्वा । दानं नानाविधं मुदा ॥ १५१ ॥

उपविश्य सभा-मध्ये । शिवाऽऽनन्द-तरङ्गितः ।
आहूय जनकं प्राह । विस्मय-प्रसवं वचः ॥ १५२ ॥

समागताः पारिषदा । मा मा कारयितुं द्रुतम् ।
अतः शिवाऽन्तिकं यामि । मच्चिन्तां सन्त्यजन् मुदा ॥ १५३ ॥

त्वदागम-निदानं यत् । त्ववादिष्टं शिवेन हि ।
गणाऽर्भकानां निखिल- । शास्त्राऽध्यापन-रूपकम् ॥ १५४ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


कार्यं समाचराऽत्यन्तं । त्वन्मूला जगती-तले ।
महात्मनां मनस्यैषा । मनीषाऽस्ति सुनिर्मला ॥ १५५ ॥

वीरशैव-मताऽऽचार- । प्रतिष्ठापन-हेतुका ।
लगत्यमत्सरित्-सिन्धु- । तोयेऽर्क-प्रतिबिम्बवत् ॥ १५६ ॥

तत् तत् कार्यं समाप्याऽथ । समागच्छ शिवाऽन्तिकम् ।
अहं तत्रैव तिष्ठामि । वियोगस्तु क्वचिद् दिने ॥ १५७ ॥

एतद् दिनस्य सम्यग् द्वा- । दश-वत्सर-पूर्वकम् ।
यद् दिनं तद् दिने चैव । शिव-सन्निधिमेष्यसि ॥ १५८ ॥

विद्या-दानं त्वन्न-दान- । मन्य-दानान्यहर्दिवम् ।
तत्कालाऽन्तं च निश्चिन्तः । समाचर सुमोद-भाक् ॥ १५९ ॥

तस्मिन्नित्थं कथ्यमाने । करडीशस्तथाऽस्त्विति ।
कारणाऽऽत्मा पुत्र-वाक्य- । मङ्गीकृत्वा प्रतिश्रुतः ॥ १६० ॥

तदा मरिरुषार्यस्तु । सन्तोष-रस-सागरः ।
माहेश्वराणां भक्तानां । तातस्य चरणाऽम्बुजम् ॥ १६१ ॥

नत्वा सत्या वन्दितस्य । न्यास्यामि शिव-सन्निधिम् ।
यास्याम्याज्ञाऽस्तु यास्यामि । त्रिरुक्त्वेति हसन् मुदा ॥ १६२ ॥

फाल-मूलोल्लसत्पाणि- । पयोज-मुकुलाऽङ्कितः ।
मोदेनाऽऽलोकयन् सर्वा- । नमुञ्चत् काय-कञ्चुकम् ॥ १६३ ॥

करडीशस्तदा तत्र । पुत्र-वाग्भृत-संमदः ।
भक्तैर्भृशं स्वाऽनुरक्तै- । स्तत्रत्यैर्महितोत्सवैः ॥ १६४ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


विरचय्य स्थले शुद्धे । समाधिं विधिवत् तथा ।
अनेक-नगराऽऽयात- । जनौघ-परिवेष्टितः ॥ १६५ ॥

स्वतश्च भक्ति-सन्दोह- । रचितैः सुमहोत्सवैः
वाद्यैर्नानाविधैरुच्चै- । र्ध्वनद्भिः परितोऽद्भुतम् ॥ १६६ ॥

वेदाऽऽगमाऽऽदि-सन्मन्त्र- । पाठकैर्विबुधोत्करैः ।
एवं नानाविधैर्दिव्यै- । रुत्सवैरुत्सुकाऽन्वितः ॥ १६७ ॥

स-मानं च विमानं तं । समारोप्याऽसमं वपुः ।
समाधि-सविधं नीत्वा । समाकलित-सत्रयम् ॥ १३८ ॥

यथाविधि यथामन्त्रं । यथाप्रणव-षट्कम् ।
सर्वं सम्यक् सम्प्रदाय- संमुचं संस्कृतं तथा ॥ १६९ ॥

भव्यं कायं त्यक्त-मायं । स्थापयित्वाऽतिनिर्मलम् ।
एवं समाधि-संस्कार- । सत्क्रियां तां समाप्य च ॥ १७० ॥

दानं त्वमानं कृत्वाऽथ । गणाऽऽराधनमेव च ।
आश्चर्य-जनकं तत्र । जनानां रचयन् मुदा ॥ १७१ ॥

तत्रत्य-सज्जन-चय- । स्तूयमान-गुणाऽऽवलिः ।
विषयाऽऽसक्ति-रहित- । स्नुषया सममादरात् ॥ १७२ ॥

संमान्य सर्वान् स भक्तान् । सबन्धुः सचर-व्रजः ।
सकलाऽऽनन्द-जनकः । सहसा समयोक्तिभिः ॥ १७३ ॥

निस्तुलो निरघो नित्य- । तृप्तो निर्मल-मानसः ।
निश्चिन्तो निर्मम-स्वाऽन्तो । निर्जगाम निजां पुरीम् ॥ १७४ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

तत्काल-प्रभृति स्मरन् स्वतनय-प्रोक्तं हि युक्तं वचो
नित्यं श्रीकरडीश्वरोऽखिल-कलाऽभ्यासं विलासं भजन् ।
प्रेम्णा वर्धयदादिपक्ष इव ताश्चन्द्राऽतिसान्द्राः कलाः
प्राप्तुं पुत्र ! शुचं सिचाऽन्य-जनवद् भौमोऽतिकामो नरः ॥ १७५ ॥

ततः सुविद्या हि चराऽर्भकेषु
प्रावर्धत प्रत्यहमभ्यसत्सु ।
दिने दिने प्रावृषि संविजृम्भत्
तरङ्गिणी-तोय-परम्परेव ॥ १७६ ॥

तदनु, कदाचित् तत्रत्यः पिठरोपपदः चन्नपाख्यो धनी घनोभवदितर-जनालक्षः कश्चन मनीषि-जनाऽऽदरोऽवनीगत-शुनासीर इव मनीषित सकल-भोगाऽनुभवः समुपात्त-निबद्ध-तुरङ्ग-त्रय-स्थाऽऽरोह-राजसंमानोऽति-सुन्दरश्चतुर-मतिः कार्यवशात्, जातु केनचित् सुधिया साकं होसपेटि नामक पुरीमुपेत्य, तत्र भग्नं विश्वेश्वर-देवाऽऽलयं कुत्रचित् कोणे पतितां विघ्नेश्वर-प्रतिमामप्रतिमामति-मानाऽभि-मानेन बुधेन समं समालोक्य, तेनैव कथितः प्रथितस्तद्देवाऽऽलयं विरचय्य, नूतनतरं चिरन्तन-विघ्नेश्वर-प्रतिष्ठापनं विधातुमना घनामोदेन पम्पा-क्षेत्रमासाद्य, तत्रत्य-शिला-चतुरङ्गुल प्रमाणा केनाऽपि नाऽपहरणीयमिति राजशासनमलक्षीकृत्य, तत्र चित्रतर-रचना-निचय-निचुलित-सम्भग्न-देवालय-तलाऽऽमतित-शिला-ततिं बलादानीय, विघ्नेश्वर-देवालयमतिविचित्राऽऽकारं कारयंस्तत्र विघ्नेश्वर-प्रतिष्ठापनं तेन बुधेन विधिवद् विधाय्य, मुधाऽयमधिकारोऽस्माकमिति तदा समागतैस्तूष्णीं कोऽत्र भवतामाह ? इति स्व-तिरस्कृतैर्भूसुरैर्मति-भासुरैः सामर्घैस्तामाद्यं तां प्रवृत्ति कामं निवेद्य, तैर्धरा-मरुद्भिः समुद्-बोधयत्क्रोधाऽनलान्मुख्याऽधिकारिणो राजभाषया व्यवह्रियमाणात् तन्मतीयत्वादधिकतराऽग्रहात् तमपराधिनं मदाऽन्धं निगल-बन्धन-शिक्षां न यामि; न त्यजामि ; इति कृत-प्रतिज्ञाद् बहुलतर-द्रविण-व्यय-प्रमुखाऽनुकूल-प्रतिकूल-प्रयत्नाऽसा-

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


द्ध्यादतिकातरश्चेतरं शरणमलभन् सत्वरं निज-पुरं गतः करडीश-सन्नधि-
मागत्य, दण्डवत् प्रणिपत्य, तदीय-निर्मल-मनश्चन्द्रोपल-द्रावण-चण-
मुखेन्दु-निःसरत् सुधामय-कर-निकरायमान-वचो-निचयं जवादुवाच,
सुवाणिः स वावदूकः ॥ १७७ ॥

मयाऽधुना कार्यमकार्यमार्य !
त्वकार्यवार्यं विधिवैशसेन
प्राप्तो हि मान-च्युति-दुष्प्रसङ्गो
मानासुरेवाऽत्र मनस्वि-लोकः ॥ १७८ ॥

तवाऽवलम्बादभिजात-दम्भो
भवं ह्यलक्षीकृतमेव सर्वम् ।
भावान्यदि त्यक्ष्यति कोऽनुकम्पाऽ-
र्णवाद्य मां रक्षति दीन-बन्धो ! ॥ १७९ ॥

जनकः किल ते त्वनुग्रहो;
जननी सत्करुणाऽधुना मम ।
त्यजतो यदि का गतिः शिशोः ?
खलु मानावनमेव मे विषम् ॥ १८० ॥

इत्थं निशम्य वचनं सुचरित्र-भाजः
संस्यन्दमान-हृदयः सदयाऽम्बुराशेः ।
वाङ् नः ससार-लपनात् कृपया हि याही-
त्युच्चोदितेव तरसा सरसाऽनुरागात् ॥ १८१ ॥

मा भैषीर्भज मा व्यथां; वहतु मा चिन्तां दुरन्तां भवान्
मा सन्दिग्धमना घनाऽऽगमेनदत् कीकीडिनाऽऽकीर्णमुत् ।
भूयास्तं तव मान एष मम चेत्याश्वास्य विश्वासवाग्
दाता भूः सदनुग्रहो हि महतां कल्पद्रु-कल्पः क्षितौ ॥ १८२ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


कीदृक् सकार्यं त्विति योचितो वा
किं तर्कितः साध्यमुतेत्यसाध्यम् ?।
निःसंशयोऽङ्गीकृत एव बाढं
वशीकृतेशा ह्यकुतो भयास्ते ॥ १८३ ॥

श्रुत्वा तन्मुखतः प्रवृत्तिमखिलां किं तावदेतावते-
त्युक्त्वा श्रीकरडीश्वरः किल समं तेनाऽतिमानार्थिना ।
गत्वा तां होसपेटि नामकपुरीं, पौरैः सुधीरैः समं
तस्मै चाऽधिकृताय साध्वकथयत् सामोक्ति-भूमोदधिः ॥ १८४ ॥

भा, भा, पुरा चिरार्जित-सुकृताऽतिशय-समुपगत-सकलाऽधिकारमहन् भुवि केवलं पुरुषैः पुरुषार्थाः संवादनीया मुख्यतः सुकृतमेवोदर्कफल-प्रदमिदमात्म-भृतामतोयत्नभरादेषितव्यरुतो गुणवतो भवतो ब्रवीम्यनेन चन्नपाख्येनाऽविदित-राजशासनेन सूर्योढाऽतिथ्यभ्यागतादि-विश्रान्ति-हेतुर्देवालयस्तत्-पम्पा-क्षेत्र-शिलाः समादाय व्यरचि; न तु स्वाऽऽलयः; ततोऽयं मन्तुः क्षन्तव्यः शान्त-चित्तेन भवता इति सविनयमुक्तं मुक्तशमेनाऽधिगत-निज-वृत्तान्ते नूतनाऽऽगतत्वेन पुनरिदं कार्यं परित्यज्य भवदुक्त यथा तथैव कार्याऽन्तरं निरन्तर चिरं करिष्यामीमं मदाऽन्धं न त्यजामि, इत्युक्ते, तथा न कर्तव्यमिति पुनः-पुनः कथितेऽपि सत्यं, सत्यं शिक्षयामि इति ब्रुवाणे पुनर्हितवचनमश्रुतनतामाज्ञाऽपि वितथी भवति राज्यं, किमाज्ञा-फलमित्यभियुक्तोचित स्मर; तथा मा स्समास्तथा शान्तिरस्त्विति सुस्निग्ध-वचनतः सह विजृम्भत् प्रदीप इवोन्नुषद्रोषे तस्मिन्नधिकृते निगल-बन्धनेन शिक्षयन्तु भवन्त इत्युक्त्वा, राजभृत्याऽनन्तर्गते तेषु तथा कर्तुं स्वभयात् त्यक्तुं डोलालीलामभ्युषन् माननेषु तदा महिमा-निधिः करडीशः "भो, भो, भवद्भिस्तथा नाऽऽ-चरितव्यमिमं प्राड्विवाक-सभां नेष्यन् मोचयिष्यामि" इति निज-वचनतश्चकितेषु महिमाऽतिशयादिति-विधेयताक-बुद्धि-शून्यतयोन्मत्त-सङ्घवत्तूष्णीं स्थितेषु सिंहराजाऽनुग्रहीत-हरिणे हरिणाऽरि-प्रयत्नवत्

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



तत्र यत्ने व्यर्थयन् तं चन्नपाख्यं रथमारोहयित्वा, सत्वरं वल्लारि नाम्नीं राजधानी गत्वा, प्राड्विवाक-सन्निधि-मुपेत्य. निखिलमुदन्तं निवेद्य, सुविज्ञाय, साऽपराधोऽपि कार्यं निज त्यज; प्रसङ्गे बहुल-द्रविण-विसर्जन-पूर्वकं प्रवृत्त इति भवन् मानो ममेति मयाऽङ्गीकृत-स्ततो भवता महता यथाक्रमं बहुल-निजाऽमोघ-योचनया शिक्षामपरास्य रक्षा-कारवेति वचः सार्थं सार्थकमवददवनतावलिः ॥ १८५ ॥

श्रुत्वा तस्य गिरं परं निज-गुरोर्मन्त्रं विजानंस्तमा-
नीत्वा चाऽधिकृतं तदीय-महिम-स्तोमं निकामं वदन् ।
कृत्वा तं विनयाऽञ्चितं किल समं तेनेत्थमालोच्य तत्
कार्यं साधु विधाय राजनियमा व्यत्यासमत्यादरात् ॥ १८६ ॥

आकारयित्वा करडीशमेता-
वानन्दयित्वा तव चन्नपाख्यः ।
मुक्तोऽयमुक्तेत्यधिकारिणौ तौ
सम्प्रेषयामासतुरादरेण ॥ १८७ ॥

इत्थं दीन-जनान् भृशं विधि-वशादायात-कष्टान् बहून्
शिक्षातो विनिवार्य चाऽऽत्म-महसाऽऽत्यापत्तमो वारयत् ।
निःशेषं प्रतिवादितुं च निखिलं तद्ग्रन्थ-बाहुल्यतो
भीत्या न प्रतिपादितं किल तथा वक्तुं हि शक्तिर्न मे ॥ १८८ ॥

अथ, कदाचित् सदा सम्पदामास्पदाऽधिकमुदा यति-सदावलिभृद् आदवानि-नामक-पुरे पुरारि-पदाऽर्चन-परा नरा अपि सदैव दैव पदा-ऽभिधेया; करडीश-बान्धव-सदीश्वरार्य-प्रमुखा दुरित-विमुखाऽखिल-सुखावहाऽनादि-बसवेश्वर-पुराण-कथा-श्रवणं बहुल-द्रविण-व्ययं सादरं समारभ्य, नित्य- गणाऽऽराधनादि-समुत्सवैः समं समाप्य च ततोऽन्ते नितान्तं च्छत्र-चामराऽऽन्दोलन-गज-तुरग रथादि-वैभवैर्मत-गुरून्, अमित-चरेन्द्र-समूहमाहूय च प्रतोली-महोत्सवविधिं विधिवद् विधातु-

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



मारभमाणास्तदानीं मदाऽऽविलैः कैश्चित् साऽमर्षैर्धीमद्द्विजैः षष्टि-संख्याकैः "पुराणमिदमशास्त्रीयं; प्रमाण-शास्त्रीयतां प्रतिपाद्य, महोत्सवः कर्तव्य इति निरूद्धास्ततस्तेषु सर्वेषु भवतेष्वयमेव शरणः शरणमिति मत्वा, करडीशमुपेत्य, सर्वं कथयत्सु, तदा महिमा-निधिरहिमांऽशुतेजसि करडीशस्तैः सकलैः साकं त्रिविष्टपवत् सुमनो-जन-मनोज्ञां, सत्यलोकवद् वाग्विधि-विलास-स्थलीं, वैकुण्ठवन्निरन्तरमच्युतश्री-परिरञ्जितां, कैलासवत् सकल-कांक्षितप्रद-शङ्कर-सर्वमङ्गलाऽलङ्कृतां, पम्पा-क्षेत्रवत् सुकलावद् विरूपाक्षाद्यप्रतिमानुषंजितां, श्रीशैल-सीमावत् मल्लिकार्जुन-विबुधेश्वर-परिष्कृतां, पुनर्या कलानिधि-विलास-स्थलमपि भास्वत्प्रभावाऽञ्चिता सदागमनिवह-श्रीपण्डिताऽपि नित्याऽवनताऽवलीढा मास्वदनन्तादि-प्रतिपादित-कला-विजृम्भणाऽऽकुलाऽपि, अशेषाद्य-विद्याऽभ्यसनाऽनुकूला तां स्व-कीर्तिलता-प्रभवाऽऽलवालां कलितशीलां पाठशालम् उपेत्य, स भक्त-समूहं समभिवन्द्य च सकलमुदन्तम् उदीरितेऽस्मद् विद्या-प्रभाव-प्रकटन-प्रसङ्गः प्राप्त इति विरूपाक्ष-विबुधादि धीमस्तोमे कामं सामवदे तदानीं तत्पाठशाला-गुहाऽऽवास-केसरीव भासुरः सदग्रेसरौ मल्लिकार्जुन-सुधीन्द्रोऽनवद्य-विद्या-कुतूहला-दलङ्गीकृतेतर-मतीय मतिमत्प्रभाव-स्वभाव-स्तवभाषत ॥ १८९ ॥

भास्वद्भक्ति-पयोधि-पार्वण-विधौ हृद्याऽच्छ-विद्या च याऽ-
भ्यासार्थं भवतोदनच्चुतिरियत् ते वेति को वेत्ति ताम् ?।
तत्तत्सार्थकतां विनेतुमधुना कालो हि कूलो हि न-
स्तत्सवीक्ष्य मनो-विनोदयमहन् शौर्यं त्ववार्यं परैः ॥ १९० ॥

श्रीमद्भवन्महिम-सम्भवमतसुविद्या
वैदग्ध्य-वार्धि-विचलद्-वचनोर्मि-माला ।
श्रीवीरशैव-मत-दूषक-दुष्ट-जिह्वा-
व्यालीषु सम्भजतु तां द्विजराज-केलीम् ॥ १९१ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


आकर्ण्य वाक्यमिति तत्प्रतिकूलवाद-
व्यग्रालिजात-भय-सान्द्र-तमोऽर्क-तेजः ।
जृम्भत्प्रमोद-भरितः करडीश्वरस्तैः
साकं सतोष-हृदयैः सदनं जगाम ॥ १९२ ॥

पुनः, करडीश्वरः स्वयमेक एव पाठशालां गत्वा, नत्वा च तं मल्लिकार्जुनमनीषिणम्, आखण्डलमिव विबुधेन्द्र-जिष्णुं, रहं विहसन् "भवन्तः, तावद् अभ्यस्त-समस्त-कला-विलासेनैव कुलाऽन्तर-कलानिधि-महा प्रोत्साहक-राजत् तेजो-भास्वन्तस्तथाऽपि नूतनाश्चाऽद्याऽपि विद्याऽभ्यास-नियताः, परं ते चिरन्तना बहुसभा प्रविष्टा दुष्टाश्च, प्रथममेव नवोन्मिषद्बालरसाल-सरस-शिखा-निकृन्तनवद-स्मिन् प्रसङ्गेऽपजयो मा भूयादिति सन्देहो बाधते, काऽपि शङ्काऽस्ति चेत्, मदग्रे वक्तुमातङ्काभावस्तं महोत्सवं द्रु महाऽधिकृत-सहायमूलेन चालयामि केनाऽपि व्याजान्तरेण भवतस्त्यजन् व्रजन् तत्पुरमिति तदा शयमभिज्ञातुमना घनाऽभिमानादित्युक्ता पुनः पुनस्तदानीं इषद्रोषाऽरुणित-चक्षुषा तेन सुधीन्द्रेण भवान् महान्, इतराऽसाधारण-वितरण-प्रसङ्गे परिश्रमवदत्र विद्या-प्रसङ्गे भवतः कः परिश्रमः ? किञ्चिदिदं भवदुक्तं सौहार्द-प्रभवमिति सहेलमितर-सहायं विहायैव तान् दूषकान् महाऽपजय-घण्टापथ-पान्थान् करोमि, इति सरोषं पुनः क्षमातले ममाऽपजयः स मान-रहित-भवन् महिमा-बलेन शश विषाणवद् मृषा भूत इति जानीहि, इत्युक्तः सन्तोष-सागर-निमज्जन-परवशीभवन् मनागुन्मिषित-हासस्त्रासोद्गमद्भिः शब्दैः पुनश्च युष्मदध्यापका ह्यस्मदीया विद्वद् राजगोपालाचार्या महिशूर-राज-दत्तेन-

"तर्काऽलङ्कार-कान्तार- । भ्राम्यन्मत्तेभ-केसरी ।
श्रीविद्वद्राजगोपालाऽऽ- । चार्य-वर्यो विराजते ।।"

इति बिरुदेन समं समञ्चिताऽस्मदभिमता नुकूल-प्रवर्तन-शीला अपि कालाऽनुगुण्येन तेषां पक्षमलम्बिताश्चेत्, किं कर्तव्यमित्युच्चरन्, पुनस्तेन संख्यावता न चैवं तत्पक्षं नाऽवलम्बन्ते भवत्कृत-नित्याऽऽदरेण

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

भवद्दत्त-बहुल-द्रविणजनित-प्रेम्णा च मुख्यतो भवदीयाऽप्रतिम-महिमाऽतिशयात् सर्वात्मना वीरशैव-मताऽधिक्य-प्रतिपादनैकाग्र-चित्ताश्च, अस्मदादयो जगत्प्रसिद्धा भवन्त्विति चेतसा जात-साहसं नित्यं कृत-प्रयत्नाश्च मुदा संशय-विधानम् अलम् आहोस्वित् ते तत्पक्षम् उररीकृताश्चेत् तेषां महीयसां कृपयैव अस्माकमेतादृशोऽधिकारः सम्प्राप्तस्तथाऽपि भवत् सन्देह-निरासार्थं किञ्चिद् ब्रवीमि । सभायां तेषां रसना यथा न चलति तथा कर्तुं शक्तिरस्ति मे; संशयं त्यज; मोदं भज; सुव्रजामः" इति सादरमुक्तः स करडीशः सर्वं विशदमभूदिति प्रभूत-प्रमोद-रसः कायमापूर्य, उत्क्षिप्य, नयनाऽञ्चल-नालाद्बहिरुद्गत इव सान्द्राऽऽनन्द-बाष्पधारां विमुञ्चन् समं च विबुधवरैस्तद्भक्तै परिवृत स्वाऽवहित-तमो विमोचयितुं लोकबन्धुरुदयमचलमिव तत्पुरं परहितायत-व्रत-स्थितः प्रतस्थे ॥ १९३ ॥

तदा तेषां भाषाल्यधरित-सुधातां सुमनसां
सदा मोदाः पाद-नति-मुख-सभक्ति-क्रमममून् ।
चिदा युक्ता भक्ता विविध-विनियोगैर्विनय-सं-
पदाऽऽमन्दाऽऽनन्दास्तमपि करडीशं विदधिरे ॥ १९४ ॥

ततश्च तत्रत्य-सुभक्त-सङ्घ-
समां वितेनेऽतिशुभा-निभां च ।
तां षष्टि-संख्याक बुधेषु केचित्
समागताः; केचन नाऽति-भीताः । १९५ ॥

तस्यां मिथः शास्त्र-विवाद-केली
न वाऽभवत् तोष-निवास-हेतुः ।
ययुः प्रतिष्ठां करडीश-शालाऽ-
ञ्चिता बुधा स्व-प्रतिभा-बलेन ॥ १९६ ॥

ततः, सुधर्माऽधिष्ठित-समनोऽधिपतिः मल्लिकार्जुनमनीषी विविध-वाद्यैरलं प्रकृतमनुसरामः । इति स्वीयैर्विबुध-पुङ्गवैः साकं श्रीकण्ठ-

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



मतोद्दीपनार्थं मतान्तर-गतानां धीमतामपि, अप्रतिपत्तेः; अथवा मात्सर्याद् वा बसवेश्वर-पुराण-विषया प्राचीनत्वाऽशास्त्रीयता प्रतिपादकानां हृदय - गुहा - ग्रहाऽन्तर्व्यालीढ-गाढाऽन्धकाराऽपसारार्थं भास्वद्भिः श्रुति-स्मृति-पुराणादि-प्रमाण-वचनैः तदुपस्कारक-प्रकृष्ट-वैदग्ध्य-प्रभाव-निरर्गं -निर्गलद्-बहुलेतर-शास्त्रीय-वाग्युक्तिजालै-स्तेषां भ्रमाऽरण्योच्चलद्-वचन-मृग-निचयान् आवध्य, सर्व-देवता-सार्वभौम-सकल-जगज्जन्मादि-कारण-परात्पर-परशिवाऽभिन्न-बसवेश्वर पुराण-कथायाः प्राचीन-प्रमाण-शास्त्रीयतां महोत्सवाऽर्हं-पूज्यतां च प्रदर्शयंस्तेषां हृदय-ग्रन्थिभेषजैर्वायु-ग्रन्थिमिव द्रावयन्, पुनरनादि-संसिद्ध-श्रुत्यादि-सकल-प्रमाण-विद्या-प्रतिपादित-श्रीवीरशैवमतस्य अन्य मतोत्कर्षतां प्रतिपादयन् प्रतिकूलवादिनां तेषां चपलतर-मनःकुरङ्ग-यूथं निज-वैदग्ध्य-गौरव-विशेष-रश्मिना कर्षयन्, सद्भक्तजन-वशतामनीनयन्, मनीषि-तति-वनी वसन्तः ॥ १९७ ॥

वैदग्ध्याऽम्बुधि-मल्लिकार्जुन-सुधीड् जिह्वा सुकादम्बिनी
वर्षन्सस्तनितोक्ति-वृष्ट-विसरैर्भीतः प्रभूत-ज्वराः ।
चक्राऽङ्गाः किल ते द्विजाः सरभसं सन्मानस तद्गता
निःशब्दाश्च सु-वीरशैव-शिखिनः सुष्टि ययुः ॥ १९८ ॥

तदा परं भूसुर-सूरिसङ्घ-
स्त्वङ्गीचकाराऽऽशु समुत्सवं तम् ।
भक्तैः समं सख्यमुपैतुमैच्छत्
सर्वं समिष्टं सरल समासीत् ॥ १९९ ॥

यातुं समीहे सुमनः-समूहे
तदा सु-भक्ता हि मुदा समूचुः ।
अमुं समीप-स्थ-समुत्सवं द्राक्-
समाप्य गन्तुं किल युक्तमित्थम् ॥ २०० ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


निशम्योक्तं तेषां सनयमथ कुन्दार्जुन-सुधी-
र्मुधाऽभ्यासस्त्यागो भवति भवतामुत्सव-विधौ।
न चाऽस्माकं कांक्षा त्वितर-विषयाऽऽसक्त-मनसां
न विद्याऽभ्यासः सम्फलति गत-नितेजंप इव ॥ २०१ ॥

तस्माद् व्रजाम इति भक्तजनं त्वनन्तं
सम्मान्य साकमचिरात् करडीश्वरेण ।
जिष्णुः स सार-सुमनोभिरगात् सु पर्व-
ल्यानन्दनं तदिव नन्दनमात्मशालाम् ॥ २०२ ॥

तदालोच्याऽन्योन्यं स्वमथरथ गोपालबुधराड्
विरुपाक्षः प्राज्ञ-प्रमुख-विबुधैः पत्रमिति तत् ।
विलिख्याऽलं-चक्रेऽप्रतिम-करडीशाऽतुल-मुदे
स तेनाऽग्रे शालाऽमल-रुचि-लसत् तोरण-मुखम् ॥ २०३ ॥

कल्याण-नन्दीश करड्यधीश
स स्थूल लक्षा कलितं गणानाम् ।
निकेतनं व्याकृति-तर्क-गान
साहित्य-वेदान्त-कला-निधानाम् ॥ २०४ ॥

पूर्वाऽर्धं-जाताऽर्थं-विचारणेन
व्यक्तोत्तराऽधार्थ-विवेचतेन
गम्भीर-लज्ज्या-प्रमुदाऽम्बु राशौ
ममज्ज चेतः करडीश्वरस्य ॥ २०५ ॥

समीक्षे तत् पत्र लसदसम-कुन्दाऽर्जुन-बुधं
बुधानन्यान् मान्यान् जगति करडीशोऽति कुतुकी ।
अजानीत् तत् सर्वं ललित-निज-यत्नाऽमर-तरौ
परं जातं पूत फलमिति महाऽऽमोद-जलधिः ॥ २०६ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


तदा, तदा, आदवानि-नामक पुरे पुरा पराजित-द्विजा निजाऽपकर्षाऽति-ज्वलदमर्षाऽग्नि-ज्वाला-मालाऽवलीढ-हृदय--गुल्मोज्जिहान-विविध-विचारहरिणा हरिणा स्वयमरिणा सह कठिणां घटाः समुत्कटा योधनमपेक्ष्यमाणा इव शरणाऽऽगतोद्धरणाऽऽतुर-करडीश्वर-करुणा-पात्रमिमे जना इत्यजानन् निजाऽनल्प-मदेन चैतत्पुरे कदाऽप्येतादृश-महोत्सवो न जातः, ततः कलहः समुत्पद्य, जनानां महाऽपायो जायेतेति स्व-मतीयं गोप्यं विज्ञाप्य, तेन निवारित-महोत्सवैस्तदानीं पुनः भिन्नैः सुगुण-द्रविणादि-सम्पन्नैर्भक्त- जनैर्निवेदितः करडीशः क्रमतः समाकर्ण्य तल्लपितं, कुपितः पुनस्तत्पुरमागत्य, स्वदर्शनार्थं समागते गोपे "पाप! भवत्कृत-पुराण-महोत्सव-विघ्नो भवदधिकार-विघ्न एव, इति जानीहि; महोत्सवं तु कालाऽन्तक-मूलया लीलया चालयामि; गच्छ; तुच्छं भवत्साहसमाचर;" इत्युक्त्याऽति-भीतया "महात्मन्! ममाप-राधः कोऽत्र? राजशासनपद्धत्या रोधः कृतो ममोपर्यधिकारिभ्यो मह्यमाज्ञा दापिता चेद्, अहमेव स्थित्वा, निर्वञ्चकतया पुराण-महोत्सवं कारयिष्यामि; तूष्णीं निरपराधे मयि मा कुप्यतु; भवान् महानुभाव" इति साध्वस-चरिताऽभिमानं सप्रार्थिते सकरणं पुनः करडीशः स्वमहिम-जनित-भल्लूकाख्य-जनकाऽक्ष-दर्शक-सहायेन महोत्सव-निरोधक-नियमनार्थं साऽऽयुधान् शत-द्वयाऽश्ववारान्, अधिकारिणमेकं मुक्तकोश-खड्गं षष्टि-शृङ्खलाः समादाय समागतः क्षमा-विहरदुमा-रमण-सुमातङ्गः स मानसः प्रियं कुमानवान् बन्धनाऽऽलये निवेशयित्वा चेत्थं सर्वं नियम्य, सीमाऽतीत-शिवगण-सन्तर्पणम् असदृशं समाप्य, तेन स्वाऽनुकूल-मधुराऽऽलापेन गोपेन साकं गज तुरग-रथ-च्छत्र-चामर-तिर्यगाऽऽन्दोलन-बिरुदावली ध्वनन् नानाविध-वाद्य-निवहादि-विभवैः साकं प्रमाण-शास्त्रीय-कथा-पूरित-बसवेश्वर-पुराण-महोत्सवं प्रति, प्रतोल्यां प्रतिमं यथा सद्भक्तजन-मनोरथं शिव-सुसमयाऽलङ्कारं स्वैरं कारयामास ॥ २०७ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



तदा प्राहुर्भक्ताः प्रमद-भरिताश्चित्र-चरिता-
दमुष्मादस्माकं सफलमफलं जन्म कुजनैः ।
पटु-ग्रीष्माऽत्युष्माऽऽतप-तपन-तप्त-क्षिति-तलं
प्रवर्षद् वर्षाऽब्दाऽमृत-वितन-शस्योत्करमिव ॥ २०८ ॥

समस्त-भक्ताः परिताप-मुक्ताः
प्रमोद-युक्ताः सुगुणाऽनु-रक्ताः ।
श्रितामरागं खल सत्पराग
चाऽप्रेषयन् भूरि-जनैः सरागम् ॥ २०९ ॥

तदनु, तदनुकूल विविध-विलासः किलाऽसौ करडीशः, तदा निज-तनय-वचनाऽनु-प्रतिश्रुत-विद्या-विषय-वृत्तान्तम् अत्यन्तम् अश्रान्तमन्तश्चिन्तयन् स्वस्य शिव-सन्निधि-प्रस्थान-परिक्लृप्त-दिनानि च गणयन् गणानां सत्वरं सत्त्व-रञ्जितानां विविधैरुपचार-समीरणैः शास्त्राऽध्ययन-कुतूहलशरधिमनः-समुल्लास-कल्लोल-मालाम् उल्लोलयन्, पुनस्तेषां तोषार्थं मनीषितं सुतरामितराऽनपेक्षं वितरंस्तदीयोपयम-निषेक-निकेतन-निर्माण-महर्ण-निवारणादि-सकलकार्याणि स्वयमेव कलयन्स्तन्मनश्चाञ्चल्यं च दलयंस्तान् गणान् विमल-गुणान् अहमहमिकया सकल-कलाऽभ्यसन-व्यसनैक-व्यग्रांस्ततान, जिताऽनङ्ग-मताऽनन्त-कृताऽऽनन्दः । २१० ॥

अभ्यस्याऽभ्यस्य वेदे फणिपति-फणितौ-चाऽक्षपादाक्षतोक्तौ
शुम्भद्गाम्भीर्य-माध्वीरुचिर-रस-लसत्काव्यसत्काव्यकेल्याम् ।
शुद्धे सद्धर्मशास्त्रे सुललितकविता-कौशले पेशले वा
राजद्राजाऽच्छ-तेजो विशद-तमयशो मण्डिताः पण्डिताः स्युः । २११॥

तत्राऽध्येतृ-गणाऽनीके- । त्वेको लोकोत्तरश्च सः
श्रीशम्भु-समयाऽऽकाश- । चन्द्र-वाग्-झरः ॥ २१२॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


मुदुपल-बालशिलापुर-विदित-मठाद्यादि-वसति-लसितः सः ।
श्रीमल्लिकार्जून सुधीर्धीमन्मणिरभवदभव-मत-विभवः ॥ २१३ ॥

यद्वैदग्ध्यमखर्व-गर्व-विहरत् पाण्डित्य-चण्डाऽन्यवाक्-
च्छे,यो दुर्गज-वर्ग-बृंहित-महा रंहः सुसिंहायितम् ।
यत्कीर्तिः प्रतिभाति पाण्डिमभरैराक्षिप्त-दुग्धाऽम्बुधिर्
दिक्कान्ता-विततोऽङ्ग-सङ्गत-लसल्लीला-दुकूलायिता ॥ २१४ ॥

यत् पाण्डित्यमखण्ड-चण्डिम-चलच्चण्डाऽन्य-तुण्डोन्नट-
ज्जिह्वा-जाल-कराल-काल-फणि-फूत्कारे मयूरायितम् ।
यद्-वैदुष्य सुधाऽब्धि-सम्भव-यशश्चन्द्रोऽखिलं शीतलं
कृत्वा गौरमथाऽकरोदरिमुखं नीलं सदा लम्बकः ॥ २१५ ॥

यशो यस्य त्वाशा-कुवलय-दृशां कुन्तल-भरे
नवोन्मीलन्मल्ली-वितति सूत्रं विकिरति।
न चस् तद् दुर्वाद-व्यसन-रसनोद्दम्भिक सखा
कुमुद्वत्यां शश्वत् कलयति खरांऽशुः कर-कलाम् ॥ २१६ ॥

शारद सुमल्लिकार्जुन-सारयशा मल्लिकार्जुनाख्य-सुधीः ।
व्यक्त श्रीकरडीश्वर-भक्तिलता-फलमिवोदभूत् सोऽयम् ॥ २१७ ॥

एषा कवित्व-सरणिर्भुवि भूः स चन्द्र-
भूषोत्तमाऽङ्ग-सरिदच्छ-तरङ्ग-भृङ्गी ।
भाषा च या मित-निस्वदब्ज यो नि
यो षा विपञ्चि-मधुरा-रस-सौरभाऽऽसीत् ॥ १२८ ॥

अति चतुरं द्रुतगती रञ्जित सुतुरङ्गाऽऽलि-चङ्क्रमोक्ति-चये ।
कृति-संहति-सम्मति-सङ्गतमार्याः प्राहुरेनमक्षाऽङ्घ्रि ॥ २१९ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

असौ धीमन्मौलिः शिव-समय-निन्दा-पर-गिरां
पराभूतिं भूमौ न कति कतिवारान् समकरोत् ।
तथा व्यानन्दो न त्वजनि सुजनौघोत्सव-कृते
कृतान् स्वेन श्लोकानिह किल लिखामि प्रकटितान् ॥ २२० ॥

तन्मल्लिकार्जुन-मनीषि-मुखाऽरविन्द-
स्यन्दन्मरन्द-झर-सुन्दर-सु तिङन्तान् ।
श्लोकांश्चतुर्दश-महेश-मताऽभिमान-
स्थेम्ने निरीक्ष्य सधियो मुदमावहन्तु ॥ २२१ ॥

॥ श्रीशिवा-धवः प्रसीदतु ॥

इमे मल्लिकार्जुन-विबुधेन्द्र विरचित-श्लोकाः

१. पुरे मुम्बय्याख्येऽनधिगत गिरीशाऽऽगम कुलैर्
दुराचारैः केश्चिद् धरणि-दिविजैः पुल्कस-समैः ।
कृतश्च ग्रन्थोऽस्मन् मत-विषय-निन्दा-परतया
परं मुद्रां नीत्वा दिशि दिशि किलाऽभूत् प्रकटितः ॥

२. श्रीवीरशैवमत-दूषण-पूर्वकौ दु-
ग्रन्थौ बभावतुरुभाववनी-तलेऽस्मिन् ।
एकः पुरा परम-वैदिक-शब्द-पूर्वं
स्त्वासीदयं किल नवो ह्यपरः परेषाम् ॥

३. सर्वाऽऽशा विलासन्मृडाऽर्चक-जनं लक्षं हि सामान्यतः
कृत्वा वैष्णव-वीर चोदिततमं बाणद्वयं तत्कुले ।
राज्ञां द्रव्यवतां मत स्थित गुरोर्हृत्कर्कशं भाातित-
स्त्यक्त्वा निर्धनिनां भिनत्ति मृदुलो नित्यं बुधानामहो ! ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



४. यथा चित्ते लग्नं सपदि विदुषां तच्छर-युगं
तथेत्थन्तं लग्नं नृप-धनि-गुरूणां यदि तदा ।
भविष्यामो धीरा वयमपि च धीरा भुवि तदा
न चेद् दीनाऽऽधाराः खलु परनुसाराश्च सुतराम् ॥
("वयम्" इत्यत्र 'यूयम् वयम् च' इति द्वन्द्वैक-शेषः)

५. वित्तेनैव हि कार्यंजातमखिल भाव्य जगत्यां सदा
वित्ताऽऽढ्यास्तु तदेव जीव इति तत्त्यागं मृतिं मन्वते ।
ग्रन्थं दुर्मतषण्ड-खण्डनपटुं निर्माय तं मुद्रितुं
को शक्ता विबुधाः ? यतोऽस्ति कमला-वाण्योर्मिथः शत्रुता ।

६. धनिकजन-सहायः पण्डितः प्राप्त-रूपोऽ-
धनिकजनसहायो युक्तिमानेव पूर्वम् ।
विबुधवर-सपर्यायुग् धनी श्रीमदार्योऽ-
विबुध-वरनिकाशो निर्णयो योहि नो चेत् ॥

७. अघटित-सुकार्यं सुघटना पटीयसी धनी-बुधेन्द्रयोर्मैत्री ।
प्रतियुग-सिद्धां तां कलिरयमच्छिनदद्य तत् कुतः कार्यम् ? ॥

८. वयं चिन्मूलाऽद्रि-प्रबल-मठ-वर्या वयमहो !!
गिरीन्द्रार्या रम्भापुरमठवरा लोक-गुरवः ।
मताऽधिष्ठातारो वयमिति वृथा दिक्षु चरतां
यतीनां वाञ्छाऽहो !! धन-हरण एवाऽस्ति; न मते ॥

९. तेषां गज-तुरगादि दृष्टैव धनं दिशन्त्यहो धनिकाः ।
नीचैः कृत-मत-दूषणमाकर्ण्य गृहे विशन्त्यहो तूष्णीम् ॥

१०. श्रीवीरशैव-मतमद्य, पुरा प्रसिद्धं
मग्नं हि सागर-तरङ्ग-परम्परायाम् ।
आभास एतदिह भाति; ततोऽत्र जाता-
स्त्वार्या नृपाश्च धनिकाश्च गताऽभिमानाः !! ।

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


११. ग्रन्थाः सन्ति पुरातनैर्विरचिताः सख्यातिगाः; शम्भुनाऽ-
प्युक्ता दुष्ट–मताऽनुयायि–रसना–चापल्य-विध्वंसकाः ।
विद्वांसोऽपि च भूमिपाश्च धनिकाश्चैतन्मताऽऽचार्यकाः
सन्त्येवाऽत्र तथापि निष्प्रभमभूत्; किं वीरशैव मतम? ॥

१२. तुरुष्काश्चाऽप्यज्ञाः स्व-मत-कथकं ग्रन्थ–निवहं
परं ताम्राऽऽस्येभ्यः प्रथममुपदिश्यैव बहुधा ।
निजाऽऽचारोत्कर्ष–प्रकटन-परा जाग्रति कला–
विमे नीचैः शूद्रा इति निगदिताः सन्त्यपबलाः ॥

१३. वित्तं किं धनिनां गृहाऽन्तर–गतं भुव्येव लीनं मताऽऽ–
चार्याः किं समताऽभिमानमखिलं दूर्वैष्णवेभ्यो ददुः ।
भूपाः किं वर–वीरशैव–मतगा गोपास्त्वभूवन्नहो !!
कस्मान्नष्टमिवाऽभवन् मतमिदं को वेत्ति कालं कलेः? ॥

१४. महान्तो धीमन्तः सकल-निगमाऽर्थाऽवगतिकाः
पुराणानां तत्त्व–प्रमिति-निपुणाश्चाऽऽगम-विदः ।
किमस्मिन् कर्तव्यं झडिति बहुधाऽऽलोच्य सकलं
वदन्त्वद्य श्लाघ्योत्तरमधिक–शूराः शिव-मते ?! ॥

इमे त्वार्य–कृत-श्लोकाः । कलिता–ललिताऽर्थकाः ।
वीरशैव–मतोल्लास- । जनका घन-कार्यतः ॥ २२२ ॥

श्रीमल्लिकार्जुन-मनीषि-सुधाऽब्धि–जात
श्रीमल्लिकार्जुन–यशोऽमृतमानिपीय ।
नन्दन्ति ये च विबुधा विबुधास्त एत_
न्निन्दन्ति ये तु दनुजा मनुजाऽङ्ग-भाजः ॥ २२३ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


तस्याऽनुजो हि जनता-विनुताऽच्छ-विद्या
सस्याऽऽलि-भूरतिनयाऽभिनयं सदोघे ।
कस्याऽत्र न त्वतनुतोपनतोपलब्धेः
स्वस्याऽति-कान्त-कवना दवना प्रमोदम् ॥ २२४ ॥

तन्मल्लिकार्जुन-महा-विबुधेशाऽनुग्रह-प्रभावाऽऽढ्यः ।
दिव्याऽऽगम-धन्यो गिरि-मान्यो यः पर्वताख्य-धीरोऽहम् ॥ २२५ ॥

उन्नताऽश्म-पुरी-रम्य-। शिखामणि-मठाऽधिभूः
विरूपाक्ष-बुधो राजद्-। राज-तेजो लसद्यशाः ॥ २२६ ॥

यत् पाण्डित्य-सुधाऽम्बुधि-प्रविलसद् वाणी सुवेणी क्षिता-
नेकाऽपि स्वयमद्भुतं परिलसन् नानारसानावहा ।
भूयः सैक-रसावहाऽमृत-झरी माधुर्यमाचामती-
त्याश्चर्यं किमिति स्तुवन्ति भुवि यं सन्तो लसन्तो गुणैः ॥ २२७ ॥

सर्वाऽखर्वाऽच्छ-शर्वाऽर्चक-निवह-मनः सारसौघारुणो दु-
र्दम्भोज्जृम्भद् वचोऽञ्चत् खल-बुध-रसना चापलस्याऽपतेना ।
यः सच्चातुर्य-चर्याऽऽधरित-सुरगुरु-स्फार-वाग्जाल-माला
सीमा-सौकर्यधामाऽतुलित-रस-लसद्धृद्य-विद्या-विभूमा ॥ २२८ ॥

आकर्ण्याऽमर-वनिता विनुतां च यच्चातुरी परिश्लाघाम् ।
अधिगत-विबुध-गुरुत्वं स्मृत्वा चाऽस्वप्न-गुरुरभूद्धिषणः ॥ २२९ ॥

कविता नवयुवती गौरवकृत-परिरम्भ-पुलकिताऽङ्गो यः ।
भुवने सुहृदवनोत्सव-भवन-स्वान्तो मनीषि-जन-मान्यः ॥ २३० ॥

विरूपाक्ष-कृतोदार-। कैरवाऽमृत-दीधितिः ।
सोऽयं विरूपाक्ष-सुधी। रराज बुध-राजिषु ॥ २३१ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

पलितोपलपुरमठ-संललितः शिवबसव-नाम-विबुधेन्द्रः
सकल-कला-निधिरयमप्यकलङ्कोऽभूद्गुणालि-मणि-भूषः ॥ २३२ ॥

गोणबालपुरी राजद्- । बसवाऽभिख्य-पण्डितः ।
निखिलानां कलानां च । तत्त्वज्ञः सत्त्व-मण्डितः ॥ २३३ ॥

श्रीकोट्टूरुपुरी राजद्- । रेवणाख्य-बुधाऽग्रणीः ।
शास्त्रोपस्कृत-वाग्जाल- । माला-शालि-गलाऽङ्कितः ॥ २३४ ॥

गुलीदगुड्डपुर-स- । च्चरेन्द्र-मुरगीश्वरः ।
शास्त्र-रत्न-समुल्लेख- । शाणायित-मतिर् यतीट् ॥ २३५ ॥

यलगोड्पुरी-चञ्चत् । पञ्चाक्षर-सुधी-मणिः ।
उद्यद्-विद्या-रमा-रम्य- । शालायित-मुखाऽम्बुजः ॥ २३६ ॥

रटगल्लु-पुरी-शुम्भन्- । मुरिगीन्द्र-यतीश्वरः ।
विद्या-वल्ली-समुद्यानं । ज्ञानाऽऽनन्दमयो महान् ॥ २३७ ॥

संशुम्भद्-घन-चित्क्रिया-परिलसच्चेतः प्रतीकोऽप्रति-
द्वन्द्वो धर्मनिधिः पुरा मळियपाऽऽख्यार्यः सुवंशश्चरेट् ।
पश्चाच्चित्रिगि-सच्छिवाऽनुभव-भाक् पट्टाऽभिषेकोज्ज्वल-
स्तुङ्गो जङ्गम-केसरी शिवकलाऽऽक्रान्तो महान्तः प्रभुः ॥ २३८ ॥

कारटगिनाम-पुरमठसार-सकल-सारसो हि यतिराजः ।
सार-कलाऽब्जश्रीकासारः श्रीबसवलिङ्गदेवार्यः ॥ २३९ ॥

हुव्विन हड्गलि पुरभाक् स्तव्य-कला-जलधिरुग्रतर-दीप्तिः ।
श्राव्य-वचो निचयार्जित-भव्य-यशा मुदुकपाख्य-बुधमौलिः ॥ २४० ॥

मधुरपुरमठ-विधुरीकृत-कुबुधगीर्हि निज-धृत्या
अवरीकृत-कुवरः श्रुत-सुधुरीणो बसव नामको धीमान् ॥ २४१ ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha


एतन्मुख्य-गणान् समावृतगुणान् हृद्याऽच्छ-विद्या चणान्
कृत्वा भव्य-सहस्र जङ्गम-ततेस्तृप्ति त्वक्लृप्ति मुदा ।
स त्रिंशच्छरदं तमित्थमनिश सर्वं च निर्वञ्चनं
नन्दीशत्वमदर्शयत् स्वमपरं सोऽयं स्वकीयं क्षितौ ॥ २४२ ॥

ततः, कृताऽच्युताऽद्भुताऽध्ययन-विधि-समधिगत-सकल-कला-ऽऽवली समासादित - विमल-गुणाऽऽकुलाऽतुलाऽऽवलीढ यशःप्रसर-मौक्तिक-मालाऽलङ्कृत-वीरशैव-समय-श्रीसकलाऽङ्गेषु गण-वंश-मौक्तिक-सुधीगणेषु गणनाऽतीत-प्रमोद-शरधिः करडीशः स्वस्य शिव-सन्निधि-प्रस्थान प्रति निज-तनय-प्रक्लृप्त-द्वादश-वत्सर-पूरक-दिनस्य तस्य प्राक्तनेषु दिनेषु द्वित्रेषु स्थितेषु निज-प्रीति-भाजन-सुगुण-योज-नान् जनान् बन्धु-जनांश्च सच्चरेन्द्र समूहमाहूय च महासमाराधन-पर्याप्त-सकल-सामग्रीं च संग्राह्य, तद्दिने च सम्प्राप्ते कदाऽप्यभूत-पूर्वमिति सर्वजन-निर्गीयमान-मानेतर-चरगण-भक्तगण-लिङ्गार्चन-निरञ्जन-जङ्गम-पादाऽर्चनमहोत्सव-पूर्वकमाहासन्तर्पणं विरचय्य, स्वयमपि सत्या स्नुषया च सम पादोदकादिकमासेव्य, तां सतीं नीलाऽ-म्बिकां स्नुषां बसवलिङ्गाम्बां च समाहूय, "अहोरात्रम् इत्थमेवाऽनिशं गुरु लिङ्ग-जङ्गम-समाराधन-रते भक्तियुते भूयास्त युवां च शिवाऽ-न्तिक तदेतन्नेष्यतीति बहुलतर-सद्बोधनेन पुटपाक-शोधनेन कनकमिव तन्मनो-मलिनतामपनीय, ते निश्चिन्ततामुपनीय च सर्वैः समं स्वयं लिङ्गार्पितमासेव्य, तदानीं कन्दलिताऽऽनन्द-बाष्प-मकरन्दपूर-पूरित-तन्नयनाऽरविन्द-स्वकीयाऽचञ्चल-मनोवृत्त्यवनीप्रभवकीर्ति-वनीव सन्ता यित-शाला-विबुध-जालं चाऽऽलम्बित-शील चर-निकरमकिञ्चन-याचक-जनान् अनाथ-जनांश्चाऽऽनीय, मानेतर-नानाविध-पट्ट-दुकू-लादि-चेलाऽलङ्कार-ताम्र-रजत-सुवर्ण-मणि-मौक्तिक-गोमुख-द्रव्याणि भव्यान्येव सुतरां वितरंस्तत राग एव भक्त-माहेश्वर-सभा-मध्यम् अध्यासीनस्तान् प्रणम्य, "शिव सन्निधि-गमनाय अनुज्ञां परिपालयन्तां भवन्तः तत्र-भवन्तः" इति ससन्तोषम् उक्त्वा, सारतर-वीरशैव-

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

सदाचार-प्रचारार्थं कलाचञ्चत् पाञ्चभौतिक-तनुं मुञ्चन् पञ्चमुख-सविध-गमनोचित-रुचि-निचित-कला-कायमादाय, मोदाऽऽयतनं स्वाऽभिगमनाऽभिलाष-समीक्षमाण-प्रमथगण-परिष्कृतां महतीं महेश-सभाम् अमित-सुखाम् अखिल-शुभाम् अनिभाम् अभजत् स भजनीय-महिमः ॥ २४३ ॥

तदनु तदनुरक्ता बन्धु-साध्वार्य-भक्ता-
श्चर-विबुध-नियुक्ताः सद्विधान-प्रसक्ताः ।
तदनुलिमशरीरं भूषयन्ति स्म सारं
परिगत-सुविचारं स्वीय-धर्म-प्रकारम् ॥ २४४ ॥

अथ, नीलाम्बा बसवलिङ्गाम्बाऽनुमतिमनुसृत्य, शूराः पौरा बन्धवः सुगुण-सिन्धवः सकलभक्ताः सुमति-युक्ताः पण्डिताः सुपथ-मण्डिताः शराहितकराः सर्वे सम्भूय, प्राड्विवाकादि-राजकीय-महाऽधिकृतैः समालोच्य, तत् करडीश-नियोगाऽनुसारं श्रीमन् मरिस्वामि-मठे तद्-योगीन्द्र-समाधि-पुरोऽङ्गण-प्रदेशे भस्म-घुटिका-निक्षेप-मण्टप-पश्चाद्भागे समाधिं विधिवद् विरचय्य, सम्यग् विलेपन-रङ्ग-वल्ली-प्रसव-स्रक्-प्रणव-स्थापनादिभिरलङ्कृत्य, विमानमसमानमपि समानं, भू-रञ्जितमपि व्योम-यान-नामाऽङ्कितम्, विविध-नवीन-चीन-चेलाऽतुल-मणिमौक्तिकमाला-विलोकयज्जन-विलोचन-निगलायमान-सौन्दर्य-मञ्जुल-सालभञ्जिका-पुञ्ज-परिमल-भ्रमन्मम्ब-गुञ्ज-चञ्च-रीकसञ्चय-चञ्चत्पुष्परस-पराग-परीत-विकच-विविध-कुसुम-मालादि सुरुचिर-वस्तुजालैः परिष्कृत्य, विचित्रतरं विरचय्य, त्र्यम्बक-सभेन निज-मित्र-परमेश्वर-भक्त-प्रेम्णा महोत्सवाय प्रेषित-स्व-पुष्पकमिव रञ्जितं तन्माङ्गल्य-निकायं कायमुपनीय, तदानीं महाक्षेत्र-रथोत्सव-यात्रायै यथा तथा समागमिष्यत् सविध-विविध पुरजनैः पुराऽन्तर्वीथी हर्योपशल्य-प्रदेशे निरवकाशे विमानं समया समयोचित-स्नानपवित्र-गात्रैः पण्डित-मण्डलैः परिशुद्धभक्त-माहेश्वर-समूह-परिवृत-परितः

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha



परिपठ्यमान–निगमाऽऽगम-मन्त्रघोषैः तत्पुरोदेशे निष्कोशाऽऽयुध–कलित - कराऽश्ववार-चमू–समूह–समावृताऽक्षदर्शकादि – महाऽधिकृत – निवहनीयाऽमित-स्व–कुलीन-जनता ताड्यद्हृद्य–ध्वनद्-वाद्य–प्रतान-मधुरतरतारैः, तदग्र-देशे समुद्घुष्यत् काहली-पटह-भेरी–मड्डु-डिण्डिम झर्झरादि-वाद्य–निवह–निनादैः बाधिरीकृत–दिक्करि-निकर-कर्णकुहरम् इत्थं जृम्भत् सम्भृत–सम्भ्रमैः प्रतोल्यां महोत्सवं कृत्वा, विमान समाधि–समीपम् आनीय, तत्रत्य–पवित्रगात्रम्, आदाय, तत्र समाधौ विधि–वन्निक्षिप्य, तन्नियोग-प्रकारं नानाविध-दानैः सर्वान् आनन्दयन्तः सम्यक् समाधि -क्रियां वीरशैव-सद्धर्म-कलया सकलयाऽतुलयाऽऽकलया–मासुः ।। २४५ ।।

श्वश्रूः स्नुषा तदुभयं सभयं सभक्ति–
श्रद्धं हि भक्तवर-सच्चर-संघतृप्तिम् ।
तद् योग्यतानुऽमति-सम्मिति–शून्य–रीति
जृम्भत्-प्रमादमतनोदतनूत्सवेन ।। २४६ ।।

कैलाऽसाऽनुगतेन तेन कथितोदन्तं नितान्तं पुरा
ज्ञातं चाऽपि चिदा मुदा प्रमथ–सद्वारः स वीरप्रभुः ।
श्रुत्वेशो नगजा गजानन-गुहौ रुद्रा लसद् रागत–
श्चक्रुस्ते शिरसा रसाऽऽकुल-हृद-श्लाघाऽनुमोघाऽऽशयाः ।। ४७ ।।

आस्थाने प्रमथाऽऽवली-परिवृते शम्भोश्चिदम्भो निधेः
सोऽयं श्रीकरडाश्वरः किल जपन् पञ्चाऽक्षराऽञ्चन्मनुम् ।
सान्द्राऽऽनन्द-रस–प्रसन्न-हृदयाऽम्भोजः सुतेजः स्फुरत्
देहोऽराजद्रुमेश-भक्ति-महित स्वान्तः प्रशान्तः सदा ।। १४८ ।।

शिवकीर्तनरत-वचनः शिवध्यानैक-संरमच्चेताः ।
शिवपूजाऽऽलीढ-शयः शिवत्वतः प्राप तं स करडीशः ।। १४९ ।।

CC-0. Jangamwadi Math Collection, Varanasi.

LIBRARY
Jangamawadi Math, Varanasi
Acc. No. 3976
Digitized By Siddhanta eGangotri Gyaan Kosha



वन्दद्वृन्दारक-स्त्री-ललदलिक-चलत् कुन्तलाऽऽक्रान्तपद्भ्यां
रोलम्बाऽऽलम्बिताऽम्भोरुह-युग-युग-धिषणाऽऽशंसके हंसकानाम् ।
भूयः प्रेयः शिरःस्रक् कनदनघ धुनी खेलतां लालताञ्च-
न्नेत्रं पुत्र द्विपास्य त्रियुगमुख समुद्वीक्षणे रक्ष; देवि ! ॥ २५० ॥
आराध्या सुतुका वर्या । शिवेकामहितोत्सवा ।
सर्वार्च्यांका भगवती । सा पात्वाद्यन्त-वर्णगा ॥ २५१ ॥
कन्दर्प-घं कापथ-वृत्ति-भाजां
कङ्काल-दण्ड मुनिडिम्भतुष्ट्यै ।
कञ्जात-नेत्र भजनाद् यदङ्घ्रे-
स्तमीशानमीडेऽसम-काम्य-सिद्ध्यै ॥ १५२ ॥
राजद् भव्य-कलाऽऽकुला-कुवलयोल्लास-प्रदान क्षमा
सत्पक्षाऽङ्क-विशुद्ध-वारणचणा विश्वाऽभिराम-क्रिया ।
सन्माधुर्यरसा सु-पर्वतसुधी-वक्त्रेन्दु-बिम्ब-क्षरच्-
चम्पूनाम-सुधाझरी हि सुमनस्तोषाय नैषा भवेत् ॥ १५३ ॥
संराजन्नृपशालिवाहन शकाऽञ्चन्नाग-बह्निर्वसु
क्लोणीसंख्य नलाऽब्जपूरक-दिने दर्शेतु शुक्राऽभिधे ।
पूर्णा पर्वतसूरिणा विरचिता शम्भु प्रसादात् कृति-
श्चम्पू ते गुण-रागिणो बुध-चयास्तुष्यन्तु पुष्यन्त्विमाम् ॥ १५४ ॥
सेयं सत्कृति-वल्ली स- । न्नव-स्तबक-मण्डिता ।
आमोद-प्रसवा नित्य । जीयाद् आ-वसुधा-तलम् ॥ १५५ ॥

इति श्रीविनमदमरनिकरमौलिमणिप्रभापटलपाटलपरशिवपदार-विन्दस्यन्ददमन्दकृपारसमरन्दझरीपरितृप्तिमदुरेन्दिन्दिरायमान-मानससरसकविताकुतुकाकलितपर्वतसुधीविरचिते करडीशचरितामृतचम्पूप्रबन्धे नवमः स्तबकः ॥

॥ श्रीरस्तु, श्रीरस्तु, श्रीरस्तु ॥

॥ समाप्तोऽयं चम्पू-प्रबन्धः ॥

CC-0. Jangamwadi Math Collection, Varanasi.

Digitized By Siddhanta eGangotri Gyaan Kosha

मूरुसाविरमठीय-श्रीमद्जगद्गुरु - गङ्गाधर धर्मप्रचारक मण्डलद्वारा प्रकाशिता संस्कृतग्रन्थाः :-

१ वीरशैवानन्दचन्द्रिका
२ विशेषार्थप्रकाशिका
३ तन्त्रसंग्रहः
४ शिवमन्त्रजपविधिः
५ संस्कृतप्रवेशः
६ संस्कृतव्याकरणदर्पणः
७ संस्कृतमार्गदर्शः
८ वीरशैवसदाचारसंग्रहः
९ श्रीमत्कुमारगीता
१० हानगल्ल-श्रीकुमारस्वामिनः जीवनचरितम
११ शिवाद्यष्टस्तोत्रमणिमाला
१२ करडीशचरितामृतचम्पूप्रबन्धः
१३ मल्हणस्तोत्रम् (यन्त्रस्थम्)
१४ प्रभुदेववचनम् ( " )

CC-0. Jangamwadi Math Collection, Varanasi.